# संस्कृत साहित्येतिहासः

## द्वितीयो भागः

स चायम्



*Fuller Exhibitioner* फुल्लर ऐग्जीबिशिनर भाजा,

स्वर्णपदक प्राप्तेन,

संस्कृत हिन्दी साहित्य विषयकानेक ग्रन्थ निर्मात्रा, 'लुध्याना'स्थ गवर्मेंट कालजे संस्कृताध्यक्षेण, पंजाब विश्वविद्यालये संस्कृत बोर्ड सदस्येन, 'एम. ए.' उपाधिधारिणा, पी. ई. एस.' इति प्रशस्ति भाजा,

## अग्रवालोपाह्वेन हंसराजेन

निर्मितः



प्रकाशकः

**शक्ति प्रकाशन,**

फ़ीरोज़पुर शहर । माडल टाऊन, लुध्याना ।

प्रथमा वृत्तिः } १९५१ {मूल्यं प्रति भागः ७॥) अथवा *Sh.* 15
{सम्पूर्णं १५) अथवा £ 1 *Sh.* 10

प्रकाशक:—
योगेन्द्र मोहन 'गुप्त' बी. ए. प्रभाकर, ज्ञानी,
अध्यक्ष शक्ति प्रकाशन,
माडल टाउन, लुध्याना, वा
फीरोजपुर शहर ।




## ग्रन्थस्यास्य प्राप्ति स्थानानि

१. महेन्द्र आदर्श (नेशनल बुक स्टाल) कचहरी रोड, लुधियाना ।

२. ओरियंटल बुक हाउस, ३३० ए, सदाशिव पेठ, पूना २ ।

३. चौखंबा संस्कृत सीरीज आफिस, पो. बा. नं० ८, बनारस ।

४. ओरियंटल बुक एजन्सी, शुक्रवार स्ट्रीट, पूना २ ।

५. Oxford University Press, Oxford Press, Appollo Bunder Bombay.

६. W. H. Smith & Sons Ltd., Strand House, Portgal St. London W. C 2.

मुद्रक:—
बलवन्त राय अग्रवाल
प्रोप्राइटर वसन्त आर्ट प्रेस,
लुध्याना ।

# ❀ प्रास्ताविकम् ❀

हन्त स्वगुणगरिम्णा सकलभाषान्तर साहित्यान्यतिवर्तमानस्यापि संस्कृतसाहित्यस्येतिहासः संस्कृतभाषाऽनुपनिबद्धतया संस्कृतभारतीभवने संस्कृतभक्तैर्दुरापः स्यादित्येतादृशी संस्कृतरसिकाम्बराणां हृदयानीव ममाऽपि हृदयमधिशयाना या काऽपि व्यथा हृत्कण्टकायते तामपनेतुं खलु मामकीन एष प्रयत्नः ॥

यतः सन्दर्भोऽयं संस्कृतानुरागिणां स्ववगाहो मनोरमश्च स्यादित्येष विचारोऽस्य लेखनक्षणेषु निरन्तरं मन्मनसि स्फुरन्नभवत्, तस्माद् विश्लेषणरीतिः पदाऽसन्धिरीतिश्चानुसृताऽत्र मया। तथाहि, प्रथमं तावत्, कालिदासादिवर्णनावसरेषु 'महाकाव्यकारः कालिदासः' 'रूपककारः कालिदासः,' 'खण्डकाव्य ( Lyric ) कारः कालिदासः' इत्येवंरूपा नानाप्रकरणरचना अविधाय तत्तत्कवेर्नानाविधकृतयस्तत्तत्प्रकरण एकत्रैव परिचायिता आलोचिताश्च। अपरञ्च, न केवलं पदसन्धिदीर्घसमासोऽबहुलप्रचारस्तिङन्ताद्विपदप्रयोगश्चेह सावधानमनसा वर्जितः, अपि तु 'इदम् अत्र वक्तव्यम्' इत्येतादृशेषु वाक्येषु नहि हल् मकारेण सह तस्मात् परः स्वरो मात्रारूपेण योजितः, 'गन्तुम् उद्युङ्क्ते' इत्येवंविधानि च वाक्यान्यपि प्रायेण 'गन्तुमुद्युङ्क्ते' इत्येवंरूपेण न लिखितानि ॥

यथासम्भवं नानानूत्नतमाऽनुसन्धानफलान्यत्र समावेशितानि, पाश्चात्यैः प्रवर्तिते सिद्धान्तवर्त्मनि निपुणं निभाल्य प्रवर्तमानेनाऽपि च मया न पौरस्त्यविचारसरणिः कदाचिदपि प्रस्मृता ॥

अथ येषां प्रामाणिक कृतिकाराणामुपकृतिप्राग्भारमहं शिरसा वहामि सुगृहीतनामधेयास्तेषु कतिपये मैक्डानल-कीथ-विण्टर्निट्ज-पीटरसन-टामस-होपकिन्स-रैप्सन-पार्जिटरप्रभृतयो भवन्ति। एषां हि कृतीरस्य ग्रन्थस्य प्रणयनक्षणेष्वहं प्रतिमुहुर्व्यलोकयं पादटिप्पणेषु चैतन्नामानि प्रमाणतयोदलिखम्। ऐम. ए., डी. लिट., आफिसर-डि-एकेडेमि (फ्रांस) इत्युपपदैः समलङ्कृतानां पञ्जाबविश्वविद्यालये संस्कृत

प्रोफ़ैसर पदमधिष्ठितवतां स्वर्गीय गुरुवर श्री डाक्टर लक्ष्मणस्वरूपाऽऽर्यपादानामहं मविशेषं कृतज्ञः, एषां हि चरणानुसारेण मया यदधीतं तदत्र लेखसात् कृतम् ।

प्रयत्नोऽयं मे गीर्वाणवाणीगृह्याणां यथोचितं प्रीतिकरो भविष्यतीति, इदमाशासे—

विदुषाम् अनुचरः,

**अग्रवालोपाह्वो हंसराजः**

# ❀ विषय तालिका ❀

## अथ सप्तमोऽध्यायः

### ऐतिहासिकानि काव्यानि


| | | |
|---|---|---|
| ४० | भारते इतिहासोपक्रम | १ |
| ४१ | बाणविरचितं हर्षचरितम् | २ |
| ४२ | पद्मगुप्तस्य नवसाहसाङ्कचरितम् | ३ |
| ४३ | बिल्हण | ४ |
| ४४ | कल्हणकृता राजतरङ्गिणी | ५ |
| ४५ | अन्य कृतय | ८ |


## अथ अष्टमोऽध्यायः

### गद्यकाव्यं चम्पूश्च


| | | |
|---|---|---|
| ४६ | गद्यकाव्यस्य विभाग | १० |
| ४७ | दण्डी | ११ |
| ४८ | दशकुमारचरितम् | १४ |
| ४९ | सुबन्धु | १६ |
| ५० | बाणकृता कादम्बरी | १९ |
| ५१ | चम्पू | २४ |


## अथ नवमोऽध्यायः

### लोकप्रिया कथा


| | | |
|---|---|---|
| ५२ | गुणाढ्यस्य बृहत्कथा | २६ |
| ५३ | बुद्धस्वामिनः श्लोकसंग्रह | २९ |
| ५४ | क्षेमेन्द्रनिर्मिता बृहत्कथामञ्जरी | ३० |
| ५५ | सोमदेवस्य कथासरित्सागर | ३१ |
| ५६ | वेतालपञ्चविंशतिका | ३३ |
| ५७ | शुकसप्तति | ३४ |
| ५८ | सिंहासन द्वात्रिंशिका | ३५ |
| ५९ | बौद्धसाहित्यम् | ३५ |
| ६० | जैनसाहित्यम् | ३८ |

# अथ दशमोऽध्यायः

## शिक्षोद्देश्यकाः पशुपक्षिकथाः


| खण्डः | | पृष्ठम् |
|---|---|---|
| ६१ | शिक्षोद्देश्यक पशुपक्षिकथालक्षणम् | ३६ |
| ६२ | पशु पक्षिकथासाहित्यस्य उद्भवः | ३६ |
| ६३ | आद्यं पञ्चतन्त्रम् | ४० |
| ६४ | पञ्चतन्त्रवर्णिताः अर्थाः | ४६ |
| ६५ | पञ्चतन्त्रस्य शैली | ४७ |
| ६६ | तन्त्राख्यायिका | ५० |
| ६७ | 'सरलग्रन्थः' | ५० |
| ६८ | पूर्णभद्ररचितो ग्रन्थः | ५१ |
| ६९ | दक्षिणापथीयं पञ्चतन्त्रम् | ५१ |
| ७० | नैपालं पञ्चतन्त्रम् | ५२ |
| ७१ | हितोपदेशः | ५२ |
| ७२ | बृहत्कथान्तर्गतं पञ्चतन्त्रम् अथवा उत्तरपश्चिमीयं पञ्चतन्त्रम् | ५४ |
| ७३ | पञ्चतन्त्रकथानां पह्लवीरूपान्तरं, पश्चिमदिग्यात्रा च | ५४ |


# अथ एकादशोऽध्यायः

## रूपकम्


| | | |
|---|---|---|
| ७४ | संस्कृतरूपकस्योद्भवः | ६० |
| ७५ | ग्रीकरूपकात् संस्कृतरूपकोत्पत्तिः | ६५ |
| ७६ | संस्कृत रूपकस्वरूपम् | ६७ |
| ७७ | कतिपयानि महान्ति रूपकाणि | ६९ |
| ७८ | शूद्रकः | ७० |
| ७९ | हर्षकर्तृकत्वेन विदितं रूपकत्रयम् | ७२ |
| ८० | मुद्राराक्षसम् | ७६ |
| ८१ | वेणीसंहारम् | ७८ |
| ८२ | भवभूतिः | ७९ |
| ८३ | राजशेखरः | ८५ |
| ८४ | दिङ्नागकृता कुन्दमाला | ८७ |
| ८५ | मुरारिः | ८९ |
| ८६ | कृष्णमिश्रः | ९० |
| ८७ | संस्कृतरूपकसाहित्यस्य ह्रासः | ९० |

# परिशिष्टभागः


| खण्डः | | | | पृष्ठम् |
|---|---|---|---|---|
| १ | संस्कृतस्य यूरोपखण्डप्रचरणस्येतिवृत्तम् | ... | ... | ६२ |
| २ | ब्राह्मीलिपि लिखितलेखार्थ ज्ञानस्येतिवृत्तम् | ... | ... | ६५ |
| | नामानुक्रमणी ... ... | ... | ... | ६७ |


——:o:——

# लेखकस्य अन्ये ग्रन्थाः

मौलिकाः

१ **संस्कृत साहित्य का इतिहास** (हिन्दी में) तृतीय संस्करण संशोधित तथा संवर्धित सम्पूर्ण। लायब्रेरी संस्करण ७॥) विद्यार्थी संस्करण ४॥)

२ **संस्कृत साहित्य का इतिहास** (अंग्रेजी में) द्वितीय संस्करण (यन्त्रस्थ)

३ **A Study of Sanskrit Grammar** (अप्राप्य)

४ **Practical Guide to Sanskrit Translation 3rd Edition** (अप्राप्य)

५ **भारत विभूतयः** (भारतीयानां प्रमुखनेतॄणां चरित्राणि) (यन्त्रस्थ)

६ **प्रबन्ध प्रदीपः** (विशारद-शास्त्री-मध्यमा-उत्तमा-आचार्यादि संस्कृत पर सासु परमोपयोगी विविध शास्त्रीय-साहित्यिक आधुनिक राजनीतिक विषय भूषितोऽपूर्व प्रबन्ध ग्रन्थः) (यन्त्रस्थ)। प्रतिभागः विद्यार्थी सं २॥), राज सं॰ ३॥)

७ **आदर्श कथा मंजरी** (पंजाब में कहानियों की पहली मौलिक पुस्तक)

८ **महाराजा रणजीत सिंह** (जीवनी)

९ **हमारी सभ्यता और विज्ञान-कला** इस पुस्तक में भारत की सभ्यता और विज्ञान-कला का पूर्व-काल से अब तक का दिग्दर्शन कराया गया है, तथा भारतीय वैज्ञानिकों की जीवनियां भी बड़ी सरल भाषा में दी गई हैं। सजिल्द ... २॥)

१० **हिन्दी साहित्य का आलोचनात्मक इतिहास** प्रभाकर एम॰ ए॰ साहित्य-रत्न आदि परीक्षाओं के लिये परमोपयोगी। इतिहास विषयक ४५ प्रश्नों का महत्त्वपूर्ण सार तथा अनेक विशेषताओं से युक्त ... ५)

११ **प्रबन्ध पूर्णिमा** उच्च श्रेणियों के विद्यार्थियों के लिये ४५० पृष्ठ का सजिल्द बृहदाकार परीक्षोपयोगी ग्रन्थ। आधुनिक महत्त्व पूर्ण समस्याओं पर भी पर्याप्त सामग्री दी गई है। परीक्षा में अधिक अङ्क प्राप्त करने के लिये इस पुस्तक का पढ़ना नितान्त आवश्यक है ... ४॥)

१२ **हमारी विभूतियां** (आदर्श नेताओं के चरित्र) ... २।)

इत्यादि

संग्रहाश्च:

१. साहित्य प्रवेश (गद्यपद्यात्मक) २. उत्कृष्ट कहानियां (कहानी) ३. दिव्य बलिदान (एकांकी), ४. हमारे महामानव (जीवनी) इत्यादयः।

# अथ सप्तमोऽध्यायः

## ऐतिहासिकानि काव्यानि

तुर्येऽध्याये साधारणतः काव्यग्रन्थान् वर्णयित्वा अध्यायेऽस्मिन् संस्कृते उपलभ्यमानान् कतिपयान् ऐतिहासिक काव्यग्रन्थान् वर्णयिष्यामः। हन्त वाङ्मयस्य अङ्गमिदं भारते न तथा उपचितं यथा अन्यत्र। संस्कृते ऐतिहासिक काव्यकाराणां ग्रामणीः तावत् कल्हणो नाम काश्मीरिक पण्डितः, यस्य खलु दैवदत्ता महती समीक्षा-निर्णयिनी धीः अभूत्, यश्च वृत्तान्तोपलम्भस्य नाना साधनानां स्वामित्वात् स्वकालाऽऽसन्नभूतकालजातानाम् ऐतिहासिक घटनानां कारण कार्यविवेचन पुरस्सरं पक्षपातशून्यम् उपन्यासं कर्तुं क्षमः आसीत्। संस्कृतस्य नैकोऽपि इतिहासलेखकः अंशतोऽपि कल्हणेन तुलामर्हति[1]। एवं सत्यपि न तु असौ तावद् हीरोडोटसेन (with Herodotus) अपि तुलाम् आरोहति किमुत इदानीन्तनैः इतिहासकारैः।

## ४० भारते इतिहासोपक्रमः

(१) पुराणानि खलु प्राचीनभारतेतिवृत्तस्य ज्ञापकस्रोतस्तया अनर्घाणि सन्ति इति तावत् पुरा उपन्यस्तम्[2]।

(२) अथ तदनन्तरं ब्राह्मणादिषु वर्णिताः गुरु-शिष्य-वंशाः उल्लेखमर्हन्ति। मौखिकसम्प्रदायेन सयत्नं रक्षिताः अपि तत्र प्रक्षेपाः अत्युक्तयश्च प्रवेशं न प्राप्ता इति तु न तावत् साधष्टम्भं वक्तुं शक्यम्।

(३) तदनु बुद्धम् अधिकृत्य बहूपाख्यानानि वर्णयन्तः बौद्धग्रन्थाः निर्देष्टव्याः भवन्ति। परम् अथारभ्य इतिपर्यन्तं यद् यत् तत्र वर्णितं तत् सर्वमेव, तदेव सर्वं वा, ऐतिहासिकं तथ्यम् इति तु कथञ्चिद् न प्रत्येतव्यम्। तथाहि 'महानाम्नः' 'महावंशे' अशोकजीवनचरित विषयकं न किमपि ऐतिहासिकं विवरणं उपलभ्यते।

(४) जैनसाहित्येऽपि च वस्तुतः इतिहासनामभाजः न बहवः गभीरेतिहासग्रन्थाः दृश्यन्ते। 'पट्टावलीषु' हि जैनाचार्य-नाम-सूचीपत्रं किञ्चिद् मूल्यवद् नामायते।

(५) शिलोत्कीर्णासु प्रशस्तिषु[3] भारते गम्भीरेतिहासविषये प्रथमः पादविक्षेपः दृश्यते।

---

१. कारणानि तु अस्य पुरा तृतीये खण्डे समुपवर्णितानि।

२. एकादश खण्डे ख-भागो विलोकनीयः।

३. प्रशस्तयो नाम सुन्दरकाव्यपद्धतौ कविभिः विरचिताः स्व समकालिकानां वा स्वपूर्वजानां वा स्तुतयः। तासु उपलभ्यमानः तन्निर्मापककालः ख्रीष्टाब्दात्पूर्वं द्वितीयशतकाद् आरभ्य अर्वाग् २ उपलभ्यते।

(६) वाक्पतिराजकृतं 'गउडवहं'[1] नामकं काव्यं इतिहास कक्षां यदि नाम प्रविशेत्। कवेः शरणेन कान्यकुब्जपतिना (७४० खीष्टमम्वत्सरासन्नवर्तिना) यशोवर्मणा कृतः गौडनरेशस्य राज्य-भ्रंशः अस्य काव्यस्य मुख्यो विषयः। प्रसङ्गाद् इह तदानीन्तनं भारतीय ग्रामीण-जीवनम् अपि चित्रितम्। परम् काव्यत्वम् अस्य यथा भासते न तथा इतिहासत्वम्। अत्र गौडाधिपस्य नामधेयम् अपि न क्वचिद् ५ उपात्तम् इति तु अत्र विशिष्य अवधेयतां गच्छति।

अथ अतः अर्थवताम् ऐतिहासिक काव्यानां वर्णनम् इह आरभ्यते।

## ४१ बाणरचितं हर्षचरितम्

हर्षचरितं बाणेन खीष्टसप्तमशतकस्य पूर्वार्द्धे लिखितम्। अत्र उच्छ्वास नामानः अष्टौ अध्यायाः। बाणस्य कादम्बरीवद् अदोऽपि अपूर्णम्। हेतुस्तु अस्य कवेः अकाल-१० मृत्युः सम्भाव्यते। अत्र हर्षनृपस्य नेदिष्ठ पूर्वभाविनां राज्ञां हर्षस्य च जीवनस्य यत्किञ्चिद् वृत्तं लभ्यते न तु हर्षजीवने विशिष्य बुभुत्सिताः वृत्तान्ताः (तथाहि हर्षाग्रजस्य च 'राज्यश्री' पाणिग्रहीतुः हर्षावुत्तस्य ग्रहवर्मणश्च अपघातयोः विवरणं न किञ्चिदत्र आरोपितम्)। ऐतिहासिकांशं वर्जयित्वा सन्दर्भोऽयं सर्वथा सकल-काव्य-लक्षणोपेता कल्पनाप्रसूता कथैवास्ति। एतत्प्रारम्भे कविना स्ववंशस्य पौराणिकी१५ समुत्पत्तिः परम्परा च वर्णिता। यतश्च उपोद्घाते अस्य प्रसङ्गानुषङ्गाद् वासवदत्ताकार – भट्टारहरिचन्द्र – सातवाहन – भास – कालिदास – बृहत्कथाकारादीनां केषांचिद् लब्धयशसां भूतकालिक-कवीनां नाम्ना कीर्तनमपि कृतम्, तस्मादस्ति अस्य कश्चिद् गौरव विशेषः साहित्येतिहास जिज्ञासूनाम्।

कथाऽऽख्यायिकयोः परस्पर भेदं दर्शयितुम् आलङ्कारिकैः हर्षचरितं आख्यायि-२० कायाः उदाहरणतया निर्दिश्यते[2]। 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्'

---

१. अस्य परिचयः पुरा चतुस्त्रिंशे खण्डे चतुर्थकवेः पदे प्रत्तः।

२. तथा चोक्तम् आख्यायिका लक्षणं साहित्य दर्पणे (६, ३३४, ३३५, ३३६)

"आख्यायिका कथावत् स्यात् कवेर्वंशानु कीर्तनम्।
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित्॥
कथांशानां व्यवच्छेद आश्वास इति कथ्यते।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।
यथा, हर्षचरितादिः।" इति॥

कथालक्षणं तु तत्रैव यथोक्तम्—

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिद् भवेदार्या क्वचिद् वक्त्रापवक्त्रके।

(काव्यादर्शे १,८०) इति गद्यलक्षणं स्वीकुर्वताम् अलङ्कारशास्त्रिणां मतेन संस्कृतगद्यस्य श्रेष्ठलेखकेषु अन्यतमः खलु बाणः । शब्दार्थोभयसौष्ठवशालिन्या पाञ्चाल्या रीत्या भक्तो यथा बाणः न तथा कश्चिदन्य इत्यपि वदन्ति । कविराजमतेन निरुपमः किल बाणश्च (सुबन्धुश्च) वक्रोक्तिरचनायाम्। व्यञ्जनाप्रयोगे च न कोऽप्यपरः बाण-समकक्षः अङ्गीक्रियते। ऊर्जस्वलेषु वर्णनेषु च न कश्चिदपरः कृतिकारः तथा कृतितमः ५ यथा एषः । क्वचित् क्वचिद् वाक्यानि तु अस्य असाधारणं दैर्घ्यवन्ति भवन्ति । तथाहि अष्टमोच्छ्वासे वाक्यम् एकं मुद्रितानि पञ्च पृष्ठानि व्याप्नोति अपरं च त्रीणि । यावत् पाठकः वाक्यस्य अन्तं न गच्छति तावत् तस्य निश्चितार्थस्य प्रतीतिः न जायते। एवं विधा शैली यदि नाम कस्मैचिदेव पाश्चात्याय साहित्यरसिकाय रोचेत। उक्तं च वेबरमहाशयेन—'बाणस्य गद्यं खलु तद् भारतीयम् अरण्यं नाम यत्र लतोच्छेदं १० विना मार्गो न सुलभः, यत्र च बहवः अप्रतीतशब्दरूपाः श्वापदाः तत्र प्रविविक्षून् प्रतीक्षमाणाः निभृतं स्थिताः ।' इति । अथ कीथोऽपि 'शैलीकारत्वेन विचार्यमाणस्य बाणस्य दोषाः खलु अपशोचनीयाः ' इति सम्मनुते ॥

पौराणिकीनां वार्तानां महान् खलु ज्ञानविभवः बाणस्य आसीत्, अद्भुता च अस्य उत्प्रेक्षाशक्तिः अभूत् । श्लेषेऽस्य भूयसी अभिरुचिः दृश्यते । दूरार्थान् १५ स्वारस्यशालिनां शब्दशक्तीनां च महती विभूतिः खलु अस्य ग्रन्थेषु अवलोक्यते[1] । परमनिपुणतया सम्पादितानि अस्य विशदप्रसन्नचित्रवर्णनानि पाठकानाम् अतीव मनोरञ्जनानि सन्ति । यद्यत्र पाठकानां हृदये उदाहरणजिज्ञासा उदियात् तर्हि ते हर्ष-चरिते *प्रभाकरवर्धनपरलोकगमनवर्णनम् अधीयताम्* ॥

## ४२ पद्मगुप्तस्य [अथवा परिमलस्य] नवसाहसाङ्कचरितम् । १००५ ख्रीष्टाब्द कालिकम्

उत्तरकालिकानि ऐतिहासिककाव्यानि इव एतदपि पद्यमयम् एव। एतत्प्रणेता धारानरेशयोः वाक्पतिराजसिन्धुराजयोः पालितो बभूव, ताभ्यां प्रेरित एव च असौ इमं ग्रन्थं प्रणिनाय । अष्टादशसर्गात्मके काव्येऽत्र राजसुता शशिप्रभायाः सम्प्राप्तिः एव यद्यपि विषयत्वेन भासते अथापि नागराजक्षितिपतेः नवसाहसाङ्कस्य इतिवृत्तवर्णनं २५ मपि अत्र ग्रन्थे मुख्यतया निरूपितम् ॥

---

आदौ पद्यनमस्कारः खलादेवृत्तकीर्तनम् ।
यथा, कादम्बर्यादि ।" इति ॥ न च एतादृशः कथाऽऽख्यायिकयोर्भेदः दण्डिने मरोचत, तथाहि उक्तं च तेन 'तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता' इति । इतिहासमूला आख्यायिका, कल्पनामूला च कथा इति तु युक्ततरा स्यात् ॥

१ विभूतिरेषा कादम्बर्यां तु विस्तरतरा लक्ष्यते ॥

## ४३ बिल्हण:[1] (खीष्टैकादशशतकभव:)

बिल्हणस्य (वर्णितचरं चौरपञ्चाशिकाख्यं खण्डकाव्यं वर्जयित्वा) कर्णसुन्दरी नाम ऐतिहासिककल्पं रूपकं विक्रमाङ्कदेवचरितं नाम ऐतिहासिकं काव्यं च लोके प्रसिद्धम्। कर्णसुन्दर्यां कस्यचिद् विदर्भभूजाने आत्मजायाया केनचित् चालुक्यराजकुमारेण पाणिपीडनं वर्णितं कविना। रचना च अस्य ग्रन्थस्य बिल्हणस्य आश्रयीभूतेन नृपेण कस्याश्चिद् नृपसुताया वास्तविकम् उद्वहनम् उद्दिश्य तत्सम्मानार्थम् ५ अभवत्। रमणीयपद्यबहुलं काव्यम् एतत् कवे विशदस्य वस्तुचित्रणस्य योग्यतां स्फुटतरं व्यनक्ति ॥

विक्रमाङ्क देवचरिते प्रथमं चालुक्यवंशस्य पौराणिक (Mythical) समुद्भवम् उपवर्ण्य विक्रमाङ्कदेवनृपस्य पितु: आहवमल्लस्य (१०४०—१०६६) चरितं विस्तरेण उपनिबद्धं कविना। ततोऽत्र यस्य सभां कवि: अलञ्चकार तस्य कल्याणनाथस्य१० चालुक्यकुलावतंसस्य महाराजषष्ठ विक्रमादित्यस्य (१०७६—११२७) विरुदं गीतम्। परम् काव्येऽत्र यो राजवृत्तान्त कविना आरोपित असौ न केवलं संक्षिप्त अपूर्णश्च, अपितु बाणप्रणीते हर्षचरिते निबद्ध राजवृत्तान्त इव घटना-तिथि वर्णनशून्योऽप्यस्ति। अत्र निश्चत्य यद् महादेवागमनं वर्णितं तत् केवलं महाराजस्य अप्रियाणि वस्तुवर्णनानि परिहर्तुमेव इति सम्भाव्यते। गौडविजयादिवर्णनानि च अतिशयोक्तिमात्रमेव।१५ कालिदासीय पद्धतौ कृतं रुचिरम् अपि स्वयंवरवर्णनं न वास्तविकम् ऐतिहासिकं च प्रतिभाति। न च लघुपात्राणां नामधेयानि क्वचित् कीर्तितानि अत्र। रागस्य उद्दीपनतया वसन्तस्य वारिविहारस्य; ग्रीष्मान्ते प्रवातुं प्रवर्तमानानां जलार्द्राणां दक्षिणपवनाना शरद् रति सुरतानां च सविस्तरं वर्णने काव्यस्य अस्य स्वरूपं यथा ऐतिहासिक महाकाव्यानुहारि जातं न तथा शुद्धैतिहासिकम्। अनतिशयित सौन्दर्य-२० शालिनौ नायकौ आहवमल्लविक्रमादित्यौ वर्जयित्वा सर्वाणि पात्रान्तराणि अपपात्रतया चित्रितानि अत्र। अष्टादश सर्गात्मकस्य काव्यस्य अस्य चरमे सर्गे कवि आत्मन वंशं, 'पर्यटन पण्डिते' त्युपपदेन विभूष्य आत्मन चरितं, स्वाभिजन कश्मीरक्षिति, कतिपयानां कश्मीरक्षितिपतीनां च संक्षिप्त वृत्तान्तं वर्णयति। महावैयाकरणस्य ज्येष्ठकलशस्य तनूज एष कवि: वेदान् महाभाष्यं साहित्यशास्त्र च२५ सम्यग् अधीयाञ्चक्रे। नानादेशान् पर्यटन् अयं चालुक्य कुलतिलकस्य महाराजषष्ठविक्रमादित्यस्य आश्रये वसन तत्सभाम् अलञ्चकार तेन च 'विद्यापति' इत्युपपदेन एव अलञ्चक्रे ॥

इतिहासस्य गम्भीरलेखकेषु बिल्हणस्य गणना यदि नाम उचिता भाति। अथ यत (१) नृपषष्ठविक्रमादित्येन १०८८ तमेवर्षे कृतस्य दक्षिणाभियानस्य३० विषये न किञ्चिद् उल्लिखितम् अत्र, (२) १०८८ तमे एव खीष्टवर्षे राज्यासने

[1] अनेन प्रणीताया: चौरपञ्चाशिकाया: परिचय १७ तमे पृष्ठे द्रष्टव्य: ॥

अभिषिक्तस्य कश्मीरनरेशस्य हर्षदेवस्य उल्लेखश्च अत्र केवलं युवराजतया कृत, तस्माद् १०८८ खीष्टाब्दात् प्रागेव काव्यमिदं पूर्तिं जगाम इति अनुमीयते ॥

## शैली ।

शैली काव्यस्य अस्य तावद् वैदर्भी । चित्रवद् भासमानेषु सरल वस्तुवर्णनेषु काव्येन अनेन कवे परमा प्रौढि प्रकाश्यते । तथाहि आहवमल्लस्य अन्तिमक्षणानि ५ वर्णयन् स आह—

"जानामि करिकर्णान्तचञ्चल हतजीवित,
मम नान्यत्र विश्वास पार्वतीजीवितेश्वरात् ।
उत्सङ्गे तुङ्गभद्रायास्तदेष शिवचिन्तया,
वाञ्छाम्यहं निराकर्तुं देहग्रहविडम्बनम् ॥" इति ॥ १०

दीर्घसमासान् परिहरन् न प्राय एष शब्दालङ्कारेषु वा श्लेषे वा अतिसज्जते । वचनोपन्यास अस्य सर्वदा अर्थानुरूप । क्वचित् क्वचित परं शैली अस्य अस्वाभाविकत्वेन च क्लिष्टत्वेन च दुष्यन्ती अपि मुख्यत अर्थनैर्मल्येन च प्रसादेन च मनोहरैव । इन्द्रवज्रा (षट्सु सर्गेषु प्रयुक्ता) वंशस्थं च (सर्गत्रये प्रयुक्त) अस्य प्रधाने वृत्ते ॥ १५

## ४४ कल्हणकर्तृका राजतरङ्गिणी (११४९—११५० खी.)

संस्कृते इतिहासलेखकेषु प्रमुख खलु कल्हण[1] एव । दिष्ट्या आत्मन अधिचरितं तेन स्वयमेव पर्याप्त कथितम् उपलभ्यते । स ११०० मितखीष्टाब्दसमीपे कश्मीरेषु उत्पद्यत । अस्य जनक चम्पक कश्मीरशासितु हर्षस्य(१०८९—११०१) खी.) उद्भक्तिक सेवको बभूव । कूटकपटकारै नृपे अपघातिते कल्हणस्य कुटुम्बं हठाद् २० राजाश्रयविहीनम् अजायत । अस्मात् कारणात् कल्हणारोपितेषु तत्तद्राजचरितेषु न क्वापि पक्षपातदोषप्रसक्तिरस्ति । परमशैवोऽपि सन् (तथाहि यावदद्य कश्मीरेषु शैवसम्प्रदायस्यैव प्राधान्य दृश्यते) न खलु तान्त्रिकक्रियाकलापेषु अय मनोऽभिनिवेशं चकार । अधिधर्मं सहिष्णु बौद्धानाम्[2] अहिंसासिद्धान्ते च दर्शितादर खलु एष बभूव ॥ २५

कल्हण रामायण महाभारतपारावारपारीण, महाकाव्यनदीष्ण, हर्षचरितप्रभृतिकृतिनिष्णात, ज्योतिष[3] विद्यामहापण्डितश्च आसीत । अनेन बिल्हणस्य कृतयोऽपि सम्यग् अभ्यस्ता आसन ।

---

१. मङ्खस्तु कल्हण कल्याणेतिचापरेण नाम्ना उल्लिखति ।

२. वस्तुतस्तु कल्हणजन्मनश्चिरपूर्वं बौद्धहिन्दुधर्मयोर्विरोध शान्त आसीत । क्षेमेन्द्र विष्णोरवतारत्वेन बुद्धमस्तौत, कल्हणाद् प्रहेवर्षपूर्वं च बौद्ध भिक्षवो गृहमेधितयाऽवसन, इति च पठ्यते ।

३. स हि मुहुर्मुहु वराहमिहरकृतां बृहत्संहितामुन्निसति ।

कश्मीरराजवंशानाम् इतिवृत्तस्य ग्रन्थाना तत्कालात् प्रागेव विनष्टत्वाद् अप्रामाणिक वृत्तान्त बहुलत्वाद् वितथतिथिप्रचुरत्वाच्च कश्मीराणां बृहत्तरेतिवृत्त रिरचयिषो तस्य कार्यपथि सुदुर्निवारा नानाबाधा अभूवन्। महती तु अस्य ऐतिहासिक प्रतिभा आसीत् यया सा तदा उपलभ्यमानानां साधनानां पूर्णतमम् हि उपयोगं चकार। एव सत्यपि न एतत्प्रदत्ता तिथय सर्वथा प्रत्येतव्या, विशेषतस्तु ५ पुरातनेतिहासविषय। तथाहि एतद्विन्यस्त अशोककाल अद्यत्वे विदितात् तत्कालात् सहस्रवर्षपूर्वं खल समापतति। एकादश प्राचीनलेखकग्रन्थान (अद्यत्वे अप्राप्यान्) नीलमतपुराण च अहं निलोकितवान् -इति तावत् स्वयमसौ आह स्म। द्विपञ्चाशत् पुरा राजानो' बभूवु इति श्रूयते किल इत्युक्त्वा नीलमतपुराण प्रमाणी कृत्य तेषु आद्यान् चतुर नृपान् उपवर्ण्य तदनन्तरभाविनां पञ्चत्रिंशन्नृपाणां विषये न लेशतोऽपि १० किञ्चिद् उल्लिख्य पुन पद्ममिहिरम्[1] उपजीव्य अष्टौ नृपान स वर्णयति। प्रथमश्च एषु अष्टसु लव। अथ अन्तिमानां पञ्चभूपतीनां तद्वर्णनं छविलाकराद् उपात्तं भाति। स्वासन्नकालिक य इतिहास तेन उपन्यस्त स खलु विश्वसनीयश्च। भूदानपत्र-प्रशस्ति-प्रभृतीन् देवालयानां स्मृतिभवनाना प्रसादानां च निर्माणविषये विलिखितान यावतीयहस्तागतान् लेखान असौ स्वय सम्यग् आलोचितवान्, राजमुद्राङ्कान्१५ अधीतवान्, ऐतिहासिकानि भवनानि च निरीक्षितवान्। काश्मीरिकभूगोलज्ञानम् अपि तस्य अनन्यसाधारणम् आसीत्। राजतरङ्गिणी निर्माणे स तास्ता लौकिकी वार्ता तत्तद्वंशे कुलविलानि इतिवृत्तपत्राणि चापि यथोपलम्भम उपायुङ्क्त। स्वकालिकीनां प्रवृत्तीनाम अन्तिमपञ्चाशद्वार्षिकाणाम् वृत्तान्ता च विस्तृत परिचय तेन स्व पितु अन्येषा च तत्त्वविदां सकाशाद् उपलब्ध आसीत्॥ २०

कल्हणस्य ईक्षिका सूक्ष्मा निर्ममा च खलु आसीत्। तस्मात् तस्य पात्रचरित्र-चित्रण यथाभूत पक्षपातशून्य च वर्तते। स्वसमये कश्मीरान् शासत महाराजजय सिंहस्य अपि चरितवर्णने न कश्चित् कविसम्प्रदायप्रसिद्ध अत्युक्तिमय स्तुतिसस्पर्श। शब्दचित्रवद् भासमान तत्कृत तद्देशवास्तव्यानां गुणदोषोभयवर्णनं नितरां विशद यथाभूतं रुचिरं चास्ति। काश्मीरान वर्णयन् स आह— 'काश्मीरिका सुदर्शना २५ मिथ्यावादिन अस्थिरचित्ताश्च सन्ति। सैनिका: अपव्ययरता भीरवश्च वर्तन्ते जनश्रुतिम एव श्रुत्वा च पलायितु' प्रारभन्ते। क्षत्रियास्तु शूरा स्वामिभक्ताश्च सन्ति। राजपुरुषा प्रायेण लोभोपहतचेतस, प्रजार्दना स्वस्वामिभक्ताश्च भवन्ति', इति। अथ अमात्यालङ्कार-कल्हणसदृशा अपि पुरुषा सन्ति यद्गुणानिरतश्च स तान उपनौति॥ ३०

पात्रचरित्रचित्रणे कल्हण स्वपूर्वकालिकान् बाण-बिल्हण-पद्मगुप्तादीन कविन

१. पद्ममिहिर ग्रन्थयोरपीष्य पाशुपतहेलराजाभिधस्य कस्यचिल्लेखकस्य कोऽपि संदर्भ आसीद् यो बृहत्कायो ग्रन्थ आसीदिति सम्भाव्यते, परं कल्हणात् प्रागेवासौ काल-कवलित किल बभूव॥

सुतराम् अतिशेते । प्रस्तावानुरूपः हास्यसम्पुटोऽपि अस्य रचनायां दृश्यते । कल्हणं वर्णयन् उपाध्यायकीथः (Keith) आह[1] —'दर्शनीयं खलु अस्य शुद्धं देश वर्णनम् । स्वभूगोलज्ञानेन च एष किमपि रणक्षेत्रम् अवीक्ष्यैव युद्धानि वर्णयतः लिवि (Livy) सदृशान् ऐतिहासिकान् स्थाने खलु अधरी करोति', इति ॥

अथ एवं सत्यपि कश्मीरदेशस्य या प्राकृतिकी एकान्तस्थितिः तया कल्हणस्य विचारदृष्टौ अनुदारतादोष उत्पादितः । तथाहि कश्मीराणां देशान्तरैः सह सम्बन्धे ये गुणाः न तेषु कदाचिदपि कल्हणस्य दृष्टिः पतिता दृश्यते । मनुष्यजीवितं यथा अन्ये भारतीयाः आकलयन्ति तथैव कल्हणोऽपि । अस्ति हि एतन्मते विधिः बलवान्, मन्त्रतन्त्रक्रिया च तथैव प्राणहरा यथा रुजा । आधुनिक वैज्ञानिकबुद्धेः अभावादेव एष राज्याधिकारिणां मिथो मतभेदानां हेतून् न विवेचयति ॥

यत्तत्त्वं भारवी माघे च यादृशी सूक्ष्मकविप्रतिभा दृश्यते, न तादृशी कल्हणे । यदि नाम स्वकरणीयकार्यस्य भारवत्त्वं वीक्ष्यैव स एतादृक् कविकौशलानि प्रदर्शयितुं प्रयत्नं न व्यतनोत् । तेनैव काव्यान्तरेषु प्रसङ्गानुपक्तानि यानि प्रकृतिवर्णनानि विस्तरेण निवर्ण्यन्ते तानि अस्य कृतौ संक्षेपेणैव । परं 'रसनिष्पादिनीं कविप्रतिभां विना कविकृतम् अतीतकालिक वस्तुचित्रणं न जातुचित् पाठकानां हृदयङ्गमं भवति' इति साहित्यसिद्धान्तम् अभ्युपगच्छतः अस्य रचनायां मुख्यो रसः शान्तः ध्वनि-वन्धनः विभाव्यते । अथ राजतरङ्गिण्यां पात्राणां कर्माकर्मविषयिणी या समीक्षा सा खलु धर्मशास्त्रीयविधिनिषेधान् साध्वाचारांश्च पुरस्कृत्यैव । तस्माद् धर्मोपदेशरूप कवेः अस्य यद् विशेषान्तरं न तद् उपेक्षणीयं भवति । कश्मीरशासनपद्धतेश्च यत् स्वरूपम् अस्य अभिमतम् आसीत् तद् अनेन ललितादित्यमुखेन उपन्यस्तं, तच्च प्रायेण तादृशम् एव यादृशं कौटल्यस्य अर्थशास्त्रे निरूपितम् ॥

शैली—कल्हणकृता राजतरङ्गिणी खलु उत्कृष्टकाव्यवर्गप्रवेशम् नार्हति इति तावत् सङ्केतितचरम् । 'मध्यकालिके (of mediaeval times) इतिहासग्रन्थेषु इत-अत्रापि गद्यं पद्यायितं' इत्येव वक्तुम् उचितम् । अस्याः सरलसुन्दरभाषायाः अनुद्-घाता गतिः अस्याः असाधारणः गुणोऽस्ति । यथा हर्षस्य निर्जनग्रामस्य विरक्तीनां च वर्णनेन तथा ललितस्वभावोक्त्या अलङ्कृतैःवर्णनान्तरैश्च कविः तत्र तत्र आत्मनः रम्यां कविप्रतिभां व्यनक्ति । सम्वार्द्धः इतिहासग्रन्थेऽत्र दृश्यकाव्यानन्दः लभ्यते । द्वार[2]-पारामादीनां[3] पारिभाषिकशब्दानाम् अर्थसंसूचनम् अन्तरेणैव प्रयोगेण एकस्याः एव व्यक्तेः नानासंज्ञाभिः[4] व्यवहारेण च क्वचित् क्वचित् सन्देशत्र दुरूहतादोषः प्रसक्तः ॥

---

१. 'हिस्टरी आव् संस्कृत लिटरेचर' पृष्ठं १६६ ॥

२. द्वारं नाम राज्यसीमारक्षिगृहम् ॥

३. पाराप' नाम राजगृहस्य उच्चपार्श्वतः ॥

४. यथा एकस्या एव स्वसुः मोल्ल-मोडल मोडकेति त्रिसः संज्ञाः

पदे पदे च उपमाप्रयोगे अस्य महान् अभिनिवेशः दृश्यते । उपमानानि च प्रायः पर्वतः, नदी, सूर्यः, चन्द्रश्च । विरोधाभास-श्लेषादीनां च अपि बहुलः प्रयोगः प्राप्यते । अनुष्टुप्छन्दसः निरन्तरप्रयोगेण जायमानम् एकरसत्वम् अन्तरा अन्तरा रमणीयतराणाम् अन्येषां छन्दसां व्यवहारात् पाठकानां मनःसु औदासीन्यं नोत्पादयति । अस्य क्लिष्टाऽपि भाषा काञ्चन अपूर्वां शोभाम् आवहति । तथाहि नृपचाटु- ५ कारान् वर्णयन् आह——

"ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभृतां रञ्जकाः ।" इति ।

भ्रमरवासिनीं देवीं चित्रयन् आह——

"भास्वद्बिम्बाधरा कृष्णकेशी सितकरानना ।
हरिमध्या शिवाकारा सर्वदेवमयीव सा" इति ॥ १०

## ४५ लघ्व्यः कृतयः ।

(१) कुमारपालचरितम् अथवा द्व्याश्रयकाव्यम् । ११६३ तमस्य ख्रीष्टसम्वत्सरस्य समीपे जैनाचार्य हेमचन्द्रः (१०८८—११७२) काव्यमिदं प्रणीतवान् । अत्र चालुक्य वंश्यस्य कुमारपालस्य अस्यन्ततत्पूर्व वर्तिनां केषाञ्चिद् राज्ञां च चरितं निबद्धम् । इह विंशतिः संस्कृतमयाः अष्टौ च प्राकृतमयाः इति सर्वे अष्टाविंशतिः सर्गाः सन्ति ।१५ अस्य मुख्यं प्रयोजनं हेमचन्द्रस्य स्वप्रणीतव्याकरणे निरूपितानां नियमानाम् उदाहरणानां प्रदर्शनमेव । हेमचन्द्रस्य हृदये न केवलं स्वधर्मप्रचारानुरागः एव प्रत्युत परधर्मद्वेषोऽप्यासीत्, तस्मात् तेन अभिव्यक्तेषु विचारेषु अत्र क्वचित् पक्षपातदोषोऽपि दृश्यते । षोडशात् सर्गाद् आरभ्य आ विंशतितमसर्गम् अत्र जैनधर्मानुकूलत्वं कुमारपालस्य सर्वप्रवृत्तीनां प्रदर्शितम् ॥ २०

(२) पृथ्वीराजविजये पृथ्वीराजचाहमानस्य विजयाः वर्णिताः । काव्यम् इदम् ऐतिहासिकानां महते उपयोगाय भवति । हन्त अस्य त्रुटिप्रचुरः अपूर्णश्च एक एव तु हस्ताङ्कितः ग्रन्थः अवाप्यते । अस्य प्रणेतु नामधेयम् अपि न ज्ञायते । शैली च अस्य बिल्हणकृतेः सदृशी । जयरथकृतायाम् अलङ्कारविमर्शिन्यां (१२००) तावद् अस्य उल्लेखः काश्मीरिकस्य जोनराजस्य (१४४८) च अत्र टीका उपलभ्यते । अतः२५ नाम कश्मीराभिजनः एव कश्चिद् अस्य प्रणेता इति अनुमीयते ॥

(३) सन्ध्याकरनन्दिनः रामपालचरिते वङ्गनरेशस्य रामपालस्य (१०८४—११३०) अवदानानि उपवर्णितानि ॥

(४) काश्मीरिकजल्हणस्य सोमपालविलासे सुस्सलपराजितस्य नृपसोमपालविलासस्य चरितं गीयते । जल्हणः अलङ्कारनामकश्मीरक्षितिपस्य सभापण्डितः३० आसीद् इति तावद् मङ्खोल्लेखाद् ज्ञायते ॥

(५) शम्भुकृतः राजेन्द्रकर्णपूरः कश्मीरनरेशस्य हर्षदेवस्य प्रशस्तिः ॥

(६-७) सोमेश्वरदेवस्य (११७९—१२६२) कीर्तिकौमुदी सुरथोत्सवश्च ॥

(८) अरिसिंहस्य (१३ शताब्दीभवस्य) सुकृतसङ्कीर्तनम्,

(९) सर्वानन्दस्य (१३ शताब्दीजातस्य) जगडुचरितं च प्रशस्तिप्रकारे अन्तर्भावम् अर्हति। न च एकमपि एषु अत्र विशेषतः वर्णनीयं सत्वस्ति ॥

(१०) ये कश्मीरिणः कल्हणानन्तरं राजतरङ्गिणीलेखनकार्यं पुरः प्रवर्तमानं व्यधुः तेषाम् उल्लेखः इह समुचितः प्रतिभाति। (१४५९ तमे वर्षे पञ्चत्वं गतेन) जोनराजेन, तदन्तेवासिना श्रीवरेण, ततः तच्छिष्येण शुकेन च यथाक्रमं पुरोनीयमानायाः राजतरङ्गिणीकथायाः तदा समाप्तिः भवति यदा अक्बरः कश्मीराम् स्वसाम्राज्यप्रविष्टान् विधत्ते। परम् एभिः प्रणीतेषु भागेषु कल्हणसदृशी उपज्ञा च विप्रतिभा च न दृश्यते ॥

# अथ अष्टमोऽध्यायः ।

## गद्यकाव्यं चम्पूश्च ।

### ४६ गद्यकाव्यस्य आविर्भावः ।

यथा रामायणमहाभारत सदृशमहाकाव्यानाम् आविर्भावविषये तथा गद्यकाव्यस्य आविर्भावविषये ऽपि तत्त्वतः किञ्चिद् नावलुप्यते । दण्डिनः सुबन्धोः बाणस्य च प्रौढगद्यकाव्यानि अस्मल्लोचनगोचरतां यान्ति, परं तत्प्राचीनतराणां लेखकानाम् अपरिणतलेखाः हस्तगताः न भवन्ति । भट्टारहरिश्चन्द्रः कस्यचित् सुप्रसिद्धस्य गद्यग्रन्थस्य प्रणेता बभूव इत्येतावत् तावद् बाणस्य हर्षचरिताद् विज्ञायते, न तु किञ्चिदन्यद् एतत्प्रसिद्धलेखकपरिचायकं क्वचिद् अवाप्यते । सत्यपि सम्भवे अस्य दण्डिनः प्राचीनतरत्वेऽपि न परमार्थतः किञ्चिद् विदितम् ॥

अथ लोकप्रचलिताभ्यः गद्यकथाभ्यः गद्यकाव्यस्य को भेदः इतिचेद् सरलकथाधारया प्रवहमाना कथा, अलंकृतवर्णनैः जटिलं गद्यकाव्यम्, इति निर्देष्टुं शक्यम् । तदित्थं गद्यकाव्यस्य शैली अलंकृता काव्यशैली सम्पद्यते । गद्यकाव्यस्य शैल्याः अनुसन्धाने हि न केवलं प्राचीनानां सरलगद्यकथानामेव अनुसन्धानम् अलं प्रत्युत रुद्रदाम्नः शिलालेखाः समुद्रगुप्तस्य हरिषेणकृता प्रशस्तिश्च अवश्यम् आलोचनीया भवति । पद्यकाव्यस्य अलंकृतशैल्याः यः प्रभावः गद्यकाव्यशैल्यां निपतितः तस्य कालावधिना अवश्यं कतिपयाभिः शताब्दीभिः भवितव्यम् ॥

भारतीये गद्यकाव्ये इव ग्रीकगद्यकाव्ये अपि अङ्गनाङ्गसौन्दर्यवर्णनं पशुपक्षि पादप संसारस्य च रागमयव्यवहारस्य चित्रणं दृश्यते इति, एवं विधम् अन्यदपि च, उभयोः साम्यम् आलोक्य पीटरसन (            )–महाशयेन तु 'भारतीयगद्यकाव्यं ग्रीकगद्यकाव्यस्य अधमर्णम्', इति कल्पितम् । अथ केचिद् 'भारतीयैः ज्यौतिषं प्रायेण ग्रीकेभ्यः शिक्षितं, तस्माद् गद्यकाव्येऽपि बहुतरं तैः ग्रीकेभ्यः गृहीतं स्याद्, इति तर्कयन्ति । तारुण्योपजन्तुवर्णनं नायकनायिकयोः विपत्प्राप्तौ अपि धैर्याऽत्यागः, तयोः विप्रयोगः, पुनः संयोगश्च तथा च तयोः नानासङ्कटयात्राः यथा गुणाढ्यप्रणीतायां बृहत्कथायाम् उपवर्णिताः, तथा ग्रीकगद्यकाव्येषु अपि[1] । तस्माद् लेकोटे

1. ग्रीकगद्यकाव्ये बाणकथायां च एतानि सादृश्यान्तराणि दृश्यन्ते — स्नाने दर्शनमुपलभ्य रागोदयः, स्वयंवरः, अन्योन्यपत्रप्रेषणं, मूर्च्छा, अनुतापदीर्घवर्णनानि, आत्मघातोद्यतिश्च । अथ एतानि च साहित्यिक कला साम्यानि विलोकनार्हाणि सन्ति— कथासु उपकथासन्निवेशः, प्रकृतिवर्णनानि, चित्रगुणपरिचयवर्णनानि, पुरातनकथानां विपुलं

(Lacote)-महाशयेन 'ग्रीकगद्यकाव्यस्य उपजीविनी खलु बृहत्कथा' इति निरधारि। किञ्चित्कालानन्तरं तु स्वपक्षं विपर्यस्य तेन 'ग्रीकगद्यकाव्यं ननु भारतीयगद्यकाव्यम् अवलम्ब्य स्थितम्' इति स्वमतं प्रकाशितम्। किन्तु व्यभिचारीणि खलु एतानि सर्वाणि अनुमानानि सन्ति। भारतीय-ग्रीक-गद्यकाव्ययोः परस्परं वैसादृश्यं यथा अर्थवद् अवलोक्यते न तथा सादृश्यम्। "द्रुतपाठेन अपि रूपेण आत्मना च उभयथाऽपि भारतीयग्रीकगद्यकाव्ययोः सर्वथा अन्योन्यभेदः स्फुटः चकास्ति[1]।" संस्कृतगद्यकाव्ये हि श्रमसाध्यस्य वर्णनस्य ग्रीकगद्यकाव्ये तु कथायाः एव प्राधान्यं दरीदृश्यते। तस्मात् 'स्व स्व सभ्यतां च स्व स्व साहित्यिकसम्प्रदायं च उपजीव्य भारतीय-ग्रीक-गद्य-काव्ययोः परस्परनिरपेक्षं स्वतन्त्रैव खलु उन्नतिः अभूद्', इति सिद्धान्तः एव साधीयान् प्रतिभाति॥ १०

## ४७ दण्डी

तस्य ग्रन्थाः —तिस्रः कृतयः दण्डिनः इति खलु सम्प्रदायविदः[2]। दशकुमारचरितं (गद्यमयं काव्यं हीदं) काव्यादर्शः (अलङ्कारग्रन्थः एषः) च दण्डिनः एव कृती इत्यत्र न कश्चित् सन्देहः। काव्यनियन्तारः ये ये नियमाः अनेन आत्मनः कृतौ काव्यादर्शे प्रदर्शिताः निदर्शिताश्च तेषु अनेके दशकुमारचरिते स्वयमेव उल्लङ्घिताः १५ इति यत्, तत्र हेतुः 'परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्' इत्येव प्रतिभाति। 'कास्य तृतीया कृतिः' इति प्रश्ने तु नानाप्रतिवचनानि श्रूयन्ते। मृच्छकटिके काव्यादर्शे च समानम् एकं पद्यं मेदय, पिशलमहाशयेन तु 'मृच्छकटिकं दण्डिनः तृतीयो ग्रन्थः' इति अनुमितम्। भासस्य ग्रन्थानाम् उपलब्धौ सत्यां तदेव पद्यं चारुदत्तेऽपि उपलब्धम्। तेन 'इतः एव दण्डिना पद्यमेतद् उद्धृतं भवेद्' इति मतिरुदेति। २०
अथ केचिच्च काव्यादर्शे 'छन्दोविचिति'-नामग्राम् अवलोक्य 'छन्दोविचितिः एव अस्य तृतीया कृतिः' इति अवगच्छन्ति। परं छन्दःशास्त्रविषयकः ग्रन्थविशेषः एव छन्दोविचितिशब्देन अभिप्रेयते न च साधारणं छन्दःशास्त्रम् इत्यत्र साधकबाधकप्रमाणाभावाद् अपरेषां विमतमेव तादेतत्। अपि च काव्यादर्शे कलापरिच्छेदोऽपि परामृष्टः। यदि हि च कलापरिच्छेदो नाम कश्चिद् दण्डिप्रणीतो ग्रन्थः, तर्हि काव्यादर्शस्यैव परिशिष्टेन एतेन भवितव्यं न तु स्वतन्त्रग्रन्थविशेषेण। न च असौ २५

परागताः उपसर्गनामानि च अनुप्रासाश्च। (पुस्तके ये महाशयसम्पादितायाः वासवदत्तायाः पृष्ठे १५-१६। फलं निदिशंस्तु असौ आह— 'गन्मनेन न किञ्चिद् एनैः ग्रन्थैर्वा सादृश्यैः साधयितुं शक्यम्' इति)॥

1. 'ग्रे' सम्पादिता वासवदत्ता, पृष्ठं १७॥
2. 'त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः' इति शार्ङ्गधरः॥

अवन्तिसुन्दरीकथायाः प्रणेता आसीद् या क्लिष्टरचनायां बाण-सुबन्धु-ग्रन्थैः सह स्पर्धते ॥

दण्डिनः स्वचरितम्— कदा कुत्र कस्मिन् वंशे कयोः गृहे दण्डी बभूव इत्यत्र न किञ्चिद् ज्ञायते। अथ दशकुमारचरितस्य आरम्भश्लोकम् आलम्ब्य केचिद् 'ब्राह्मणो ननु दण्डी बभूव' इति ऊहन्ते; अन्ये तु यत्र अयं श्लोक उपलभ्यते तं पूर्वपी- ५ ठिका-नाम्ना प्रसिद्धं भूमिकात्मभागम् एव तावद् दण्डिनः कृतितया न अङ्गीकुर्वन्ति। एष वैदर्भीं रीतिं प्रशंसति, माहाराष्ट्रीभाषां श्रेष्ठं प्राकृतं प्रतिपादयति, कलिङ्गान् आन्ध्रान् चोलान्, दक्षिणभारत नदीश्च कीर्तयति, मध्यभारतवास्तव्यानां रीतिप्रधानां स्वज्ञानं विशिष्य विवृणोति (तथाहि विश्रुतकथायां विन्ध्यवासिनी देव्याः वर्णनं विलोकनीयम्), तेन 'दाक्षिणात्यः तत्रापि विदर्भवास्तव्यः खल एष बभूव'१० इति सम्भाव्यते ॥

दण्डिनः समयः— दण्डिनः अधिकालं केषिद्वानां नाना मतानि अवलोक्यन्ते। तथाहि दशकुमारचरितस्य विश्रुतवर्णितायां चरमकथायां भोजवंशोल्लेखं निरीक्ष्य अध्यापकविल्सनमहोदयेन तु 'महाराजभोजदेवस्य उत्तराधिकारिणि उर्वं शासति ख्रीष्टस्य एकादशशतके किल दण्डी बभूव' इति पर्यवसितम्। अन्ये तु नानासाध-१५ कान्तरप्रमाणैः 'इतः बहुतिथात् कालात् प्राग् दण्डी जज्ञे' इति निश्चिन्वन्ति ॥

डाक्टरपीटरसनमहोदयः वक्ष्यमाणहेतुभिः अष्टमशतकं दण्डिनः कालम् अकलयत्—

(१) काव्यादर्शस्य द्वितीये उच्छ्वासे १५८ तमे १५९ तमे च पद्ये अष्टमशतकोद्भवस्य आलङ्कारिकवामनस्य उल्लेखः इव दृश्यते। २०

(२) काव्यादर्शस्य द्वितीयोच्छ्वासस्य १९७ तमस्य पद्यस्य प्रतिपाद्यार्थः कादम्बरीगतेन वर्णनविशेषेण साम्यम् आवहति[२]। दशकुमारचरितस्य मन्त्रगुप्तकथायां भवभूतेः मालतीमाधवस्य पञ्चमाङ्कगतायाः तैः तैः अंशैः सह सादृश्यं प्रदर्श्य स्वर्गत विष्णुकृष्ण चिपलूणकरमहोदयः 'भवभूतेः समसामयिकेन नूनं दण्डिना भवितव्यम्' इति उत्प्रेक्षत। 'हर्षचरिते बाणेन अकीर्तितनामधेयः खलु दण्डी,२५ तस्माद् असौ बाणाद् अर्वाचीनः' इति तु नाऽऽशङ्कनीयम्, भारविप्रभृतीनाम् अनेकेषां महाकवीनाम् अनुल्लिखितत्वाद् बाणेन ॥

---

१. निरीक्ष्यतां 'काले' द्वारा सम्पादिते दशकुमारचरिते भूमिका, पृष्ठं ४४ ॥

२. 'अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥' इति दण्डी।

'केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्।' इति बाणः॥

अथ शैली च दशकुमारचरितस्य पञ्चतन्त्रस्य वा कथासरित्सागरस्य वा शैलीं यथा अनेति न तथा सुबन्धोः वा बाणस्य वा गद्यकाव्यस्य शैलीम्। काव्यादर्शे 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति सिद्धान्तयतोऽपि दण्डिनः दशकुमारचरितस्य रचना वासवदत्तां वा कादम्बरीं वा व्यपेक्ष्य नितरां सरला दृश्यते। वस्तुतः यथा सुबन्धोः बाणस्य वा रचना क्लिष्टा कृत्रिमा च न तथा दण्डिनः। भारतीयास्तु विलक्षणं किमपि दण्डिनः पदेषु लालित्यं विलोकयन्ति[1]। पदलालित्येन च अनेन सा निरन्तरविशेषणविच्छुरिता परिष्कृता च शैली लक्ष्यते या ऊर्जस्वतां रम्याणां च पदानां पेशलं प्रयोगम् आश्रयते। किञ्च, कथाम् अगणय्य आयाससाध्येषु वर्णनेषु एव सुबन्धोः बाणस्य च यथा महान् अभिनिवेशः दृश्यते न तथा दण्डिनः। न जातुचिद् असौ कथाम् उपेक्षते। एष हि अस्य यो विशेषः स खलु 'प्रायेण ६०० तमसमाप्रारम्भतः दण्डी' इति सूचयति। दशकुमारचरिते वर्णिताभिः भौगोलिकैः स्थितिभिश्चापि अस्य आविर्भावस्य एष कालः सम्यक् समर्थ्यते[2]॥

खीष्टषष्ठशतकभवो दण्डी इति सिद्धान्तः तावद् 'महाराजभोजस्य उत्तराधिकारिणि भुवं शासति दण्डी जज्ञे' इत्यस्य सिद्धान्तस्य अपि अनुकूलो भवति। तथाहि जैनानाम् इतिहासव्याकरणोभयलक्षणोपेतं सूचीग्रन्थविशेषं प्रमाणी कृत्य स्वरचित राजस्थाने कर्नलटाडमहोदयः भोजाभिधां नृपत्रयीं खलु वर्णयति या क्रमेण ५७५ तमे, ६६५ तमे, १०४२ तमे च मालवदेशं शशास। तस्मात् 'षष्ठशतकस्य अन्त्यवर्षेषु दण्डी अभूद्' इति यथार्थमिव प्रतिभाति[3]।

१. अन्वीक्ष्यतां तुर्याध्यायस्थे मारविशैलीप्रसङ्गे पादटिप्पण्याम् अनूदितः (Quoted) श्लोकः॥

२. अनुशील्यतां 'दि जियोग्रैफिकल डेटा आव् द रघुवंश ऐण्ड दशकुमारचरित', (कोलिन्स १९०७), पृष्ठं ४६॥

३. 'दृष्टैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती' इति व्याहरन्ती विज्जिका नाम काऽपि दाक्षिणात्या स्त्रीकविः दण्डिनं कीर्तयति। यदि नाम विज्जिका एषा द्वितीयपुलकेशिनः ज्येष्ठपुत्रस्य चन्द्रादित्यस्य विजयभट्टारिका नाम पत्नी एव, तदा सा खीष्टस्य ६६० तमाब्दस्य निकटे बभूव। तेनापि 'दण्डी ६०० तमाब्द समासन्नकाले बभूव' इति अनुमातुम् ईश्वरकरम्॥

अथ भामहम् अपेक्ष्य दण्डिनः समय निर्धारणे महान् विवादः श्रूयते; किन्तु 'दण्डी भामहात् प्राचीनतर इति मतं पर्याप्तप्रमाणपुष्टं पश्यामः। तथाहि (१) रुद्रटेन काव्यालङ्कारे 'ननु दण्डिमेधाविरुद्रभामहादि कृतानि सन्त्येवालंकार शास्त्राणि' इति। एवमेव नेमिसाधुना अपि अभिहितम्। भामहस्य ग्रन्थ च 'मेधाविरुद्र' इति क्रमेणैव नामनिर्देशो दृश्यते। तस्माद् 'रुद्रटादिनाऽपि इतिहास काल क्रमम् अनुसृत्यैव दण्डिप्रभृतीनां इमानि गृहीतानि' इति तर्क्यते। (२) भामहस्य निरूपणविधिं विलोक्य दण्डिनो निरूपण-

## ४८ दशकुमारचरितम्

दशकुमारचरिते दशानां राजकुमाराणां चरितानि वर्णितानि इति तावद् अस्य नाम्नैव स्पष्टम्। मुख्यग्रन्थस्य उपक्षेपः सहसा राजवाहनाभिधस्य नायक-राजकुमारस्य कथायाः उपक्रमेण भवति। अत्र च उच्छ्वाससंज्ञकाः अष्टौ अध्यायाः सन्ति। ग्रन्थादौ पूर्वपीठिका नाम भूमिका लभ्यते यत्र पञ्चसु उच्छ्वासेषु ग्रन्थस्य ५ सङ्क्षिप्तया कथया सह द्वयोः राजकुमारयोः कथे उपन्यस्ते। तदित्थं अष्टभिः मिलित्वा दश राजकुमाराः भवन्ति। उत्तरपीठिकानाम्नि परिशिष्टभागे अन्तिमराजकुमारस्य विश्रुतस्य कथा समाप्तिम् आनीयते। न केवलं शैल्या अपि तु कथाशरीररचनया कथाप्राणस्वरूपेण चापि नैते उभे पीठिके दण्डिप्रणीते इति निश्चीयते। मिथोविरोध दोषदुष्टे च खलु इमे दृश्येते। तथाहि पूर्वपीठिकायां तारावल्याः सुतः अर्थपालः,१० सुमतिनामक सचिवान्तरस्य च तनुजनुः प्रमतिः इति पठ्यते; मुख्यग्रन्थे तु क्रमेण तारावल्यां कान्तिमत्यां च लब्धजन्मानौ प्रमत्यर्थपालौ कामपालस्यैव तनयौ इति अधीयते। अथ उभयोः पीठिकयोः नानासंस्करणेषु विपुलपाठान्तरभूयिष्ठत्वाद् अपि न ते दण्डिनः कृती इति अनुमानं दृढी भवति। पूर्वपीठिकायाः पञ्चमः उच्छ्वासः शैल्या इतरान् चतुरः उच्छ्वासान् अतिवर्तते तेन नैकप्रणेतृका पूर्वपीठिका इति अवधार्यते ॥१५

अथ राजहंसो नाम मगधराजो बभूव यं मालवेन्द्रः युद्धे विजित्य राज्यात् प्रभ्रंशयामास। राजवाहनो नाम तत्सुतो दशकुमारचरितकथानायकः समस्ति। राजवाहनस्य सहचराः नवाऽन्ये कुमाराः सामन्तानां भूतपूर्वामात्यानामेव च तनयाः, ये वनम् अधिवसतः राजहंसस्य सकाशं यथाक्रमं समानीयन्त। तत्रैव शैशवम् अतीत्य यौवनोदये ते सर्वे विजिगीषवः देशदेशान्तरयात्राम आरभन्त। प्रयोजन-२० विशेषवशाद् राजवाहनः पातालं जगाम, इतरे च कुमाराः तं मार्गयिष्यन्तः नानादिशः प्रस्थिताः। किञ्चित्कालानन्तरं प्रत्यावृत्तः राजवाहनः तान् नियतस्थाने अप्राप्य तान् अन्वेष्टुकामः पर्यटितुं प्रारेभे। अथ कालेन तेषां सर्वेषां पुनः समागमः समपद्यत, एकैकश्च तेषां स्वयात्रावृत्तान्तम् अन्यान् श्रावयामास। तद्यात्रावार्ताः विचित्राः,

---

विधिः अपरिष्कृतः अवैज्ञानिकश्च प्रतिभाति, भामहस्य विषय-प्रतिपादने यथा अस्खलितत्वं तार्किकत्वं विषयावबोधवैशद्यं च लभ्यते न खलु तथा दण्डिनः। (२) अपरे-अन्ये-इत्यादि पदैः भामहेन तत्र तत्र कृताः उल्लेखाः दण्डिनः कृतौ प्राप्यन्ते ॥

भट्टिकाव्यनिर्माणानन्तरं दण्डिनः काव्यादर्शस्य निर्माणमभूद् इत्यपि तावद् निश्चितम्; यतोहि भट्टिना उदाहृता एव अलंकाराः दण्डिना लक्षिता अभूवन्, परं तेषां आनुपूर्व्यां विवरणान्तरेण तु द्वयोर्महान् भेदोऽस्ति। यदि हि दण्डिनम् अनुसरन् भट्टिः अलेखिष्यत्, तर्हि एष भेदः कथम् अभविष्यत्। भट्टिभामहयोः कालयोः विवादग्रस्तत्वाद् दण्डिकालनिर्णये न कश्चिद् विशेषः तावद् अनया समीक्षया उपलभ्यते ॥

शौर्याढ्याः विविधाश्च खलु वर्तन्ते। तासां विषयवैविध्येन विचित्रा कवेः कल्पना-शक्तिः द्योत्यते। 'स्वकालिकी हिन्दुसमाजावस्था खलु दण्डिना अत्र आलिखिता' इति यत् कैश्चिद् आशङ्क्यते तन्न, जनरञ्जनकथोपन्यासस्यैव, न तु स्वकालिकसमाज-दशायाः, कवेः इष्टत्वात्। अन्तरात्मस्वरूपेण कथाः इमाः तावत् कतिपयाभिः गुणाढ्यस्य बृहत्कथायाः कथाभिः साम्यम् उपयन्ति, यतः उभाभ्यां ग्रन्थाभ्यां मन्त्र-तन्त्रा- ५ द्याश्चर्यकर्मसु तदानींतनानां जनानां महती प्रीतिः ज्ञायते। तथाहि दशकुमारचरिते पठ्यते यद् गगनात् पतन्तं नरं मार्गे गच्छन् अपरः सहसा भुजाभ्यां धारयति, न च एकतरोऽपि आहतो भवति इति ; मार्कण्डेयमुनिना शप्ता सुरतमञ्जरी नाम काचिद् अप्सराः रजतमयी शृङ्खला जाता राजवाहनं च कथानायकं निगडितवती इति च। द्यूते स्तेये गृहभित्तिसन्धिच्छेदकरणे एवंविधकर्मान्तरेषु च अद्भुतं कौशलं पुंसाम् अत्र वर्णि-१० तम्। शृङ्गारस्य वक्तव्यावक्तव्यविचारवर्जं महता विस्तरेण यद् वर्णनम् इह कृतं तत्तु न कथमपि साम्प्रतिकेभ्यः रोचते। अस्य हि शृङ्गारः व्रीडात्मकेन अश्लीलत्वदोषेण तथा दुष्टः यथा अस्य तानि तानि स्थलानि अपसार्यैव केवलं खलु एतद् विद्यार्थिनां पठनीयं पुस्तकं भवितुम् अर्हति ॥

शैली—'दण्डिनः पदलालित्यं सुप्रसिद्धम्। न च बाण-सुबन्धु कृतिः यथा क्लिष्टा१५ तथा अस्य' इति तावत् प्रागेव आवेदितम्[1] ॥

वर्ण्यव्यक्तीनां स्वरूपालेखनगुणेन महती किल दण्डिनः प्रसिद्धिरस्ति। तथा हि न केवलं राजकुमाराद्युदात्तपात्राणाम् अपि तु हीनपात्राणाम् अपि चरितं तथा विशदम् आलिखितं यथा एकैकव्यक्तिस्वरूपम् असङ्कीर्णम् अवभासते। एषु चित्रणेषु अपि सैव ऊर्जस्विता, सूक्ष्मेक्षिका, सजीवता च प्रत्यभिज्ञायते या कवेः रचनान्तरेषु[2] ॥२०

यद्यपि प्रकृतिवर्णने वस्तुवर्णने च दण्डी कालिदासस्य भारवेः माघस्य वा कक्षां नैवार्हति, अथापि तत्कृते वसन्तस्य, सूर्यास्तङ्गमनस्य, अवन्तिसुन्दर्या सार्द्धं राजवाहन-समागमस्य, प्रमतिकथितायाः अज्ञातराजसुतायाः कथायाः, कन्दुकावत्याः कन्दुकेन क्रीडनस्य वर्णने महाकवीनां रचनाचातुर्यं चकास्ति ॥

अथ अद्भुतः कोऽपि भाषोपरि तु दण्डिनः अधिकारः (यशः) दृश्यते। दयितया२५ निर्दयम् ओष्ठयोः दष्टः मन्त्रगुप्तः मुखं करतलेन प्रच्छाद्य ओष्ठ्यवर्णान् परिहरन् स्ववृत्तान्तं श्रावयामास, तत् सर्वस्मिन्नपि सप्तमोच्छ्वासे न क्वचिद् दण्डिना

---

१. निभाल्यतां सप्तचत्वारिंशः खंडः ॥

२. महाकवित्वेन खलु दण्डी प्रसिद्धः। एतत्कृतः काव्यादर्शः सर्वोऽपि पद्यमयः। अस्य दशकुमारचरितेऽपि 'वाक्यं रसात्मकं काव्यम्' इति काव्यलक्षणं यथावद् घटते। तथा चोक्तं केनचिद् एवं प्रशंसता—

'जाते जगति वाल्मीकौ कविरित्यभिधाभवत्।
कवी इति ततो व्यासे, कवयस्त्वयि दण्डिनि।' इति ॥

ओष्ठ्यवर्णसंयोगः श्रुतेः । वैदर्भीरीतिपक्षपातिनः अमुष्य अतिरोहितार्थवती वाच्यानुरूपवाचकोद्भासिता, सुश्लिष्टावयवा, मधुरवचनोपन्यासशालिनी च रचना निर्मिता आसीत् । श्रुतिकटूनां महाकायानां च शब्दानां परिहारे अयम् अत्यन्तम् अवहितोऽवलोक्यते । गद्यरचनायाम् अपि एष दुरवबोधान् दीर्घसमासान् यत्नतो वर्जयति । निपुणः वैयाकरणः खलु एषोऽस्ति, यः कुमाराणां स्वकीयोदन्तश्रावणे न ५ जातुचित् परोक्षार्थकं लिटं प्रायुङ्क्त; लुङ्प्रयोगस्तु रचनायाम् अस्य बाहुल्येन दृश्यते ॥

हास्यरसनिष्पादने च नितरां निपुणोऽस्ति खलु दण्डी । कुमाराणां कान्तारेषु अटनानां तैः स्वप्रयोजनसिद्धये प्रयुज्यमानानां विलक्षणसाधनानां च वर्णनेभ्यः कवेः कापि हास्यरसोद्भाविनी शक्तिः सुतरां प्रकाशम् आपद्यते । अहो कार्ये कुशलता देवीवसुन्धरायाः या राजधान्याः सर्वान् महावंश्यान् आहूय मन्त्रगोपने च शपथ १० तान् ग्राहयित्वा नगरे असत्यां किंवदन्तीं प्रसारयति !

पूर्वपीठिकायाः प्रथमः परिच्छेदः (Paragraph) नूनं बाणस्य क्लिष्टां शैलीम् अनुहरति । अत्र हि वाक्येषु दुरवगमाः दीर्घसमासाः प्रयुक्ता दृश्यन्ते । मर्यादाम् अतिक्रम्य च यमकालङ्काररचनाव्यापृतः खलु पूर्वपीठिका-रचयिता आलोक्यते । यथा, 'कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा १५ रणाभियानेन यानेनाऽभ्युदयाशंसं राजानमकार्षुः', (उच्छ्वासः २, परिच्छेदः २) इत्यादौ ॥

## ४६ सुबन्धुः

सुबन्धुः अस्माभिः केवलं वासवदत्तायाः प्रणेतृत्वेन परिचीयते । वासवदत्तायाश्च प्राचीनतमः उल्लेखः बाणस्य हर्षचरिते— २०

"कवीनामगलद् दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्" इति पद्ये तावद् उपलभ्यते ॥

कादम्बर्याः आमुखस्थे विंशतितमे पद्ये 'इयमतिद्वयी कथा' इत्यत्र 'द्वयी' पदेन बृहत्कथा वासवदत्ता च ग्रहीतव्या इति तावत् कादम्बरीटीकाकृतो वदन्ति ॥

बाणाद् अर्वाचां ग्रन्थेषु अपि खलु क्वाचित्कः सुबन्धूल्लेख आसाद्यते । तथा २५ हि, गउडवहे वाक्पतिराजेन असौ भासकालिदासाभ्यां सह कीर्तितः; राघवपाण्डवीये कविराजेन आत्मतृतीयौ सुबन्धुबाणभट्टौ वक्रोक्तिरचनायां काव्यकारान्तरेण अनतिशयिनौ आख्यातौ; मङ्खेन च स भारवि-मेण्ठाभ्यां सह समभिव्याहृत्य श्लाघितः । सूक्तिग्रन्थेषु अपि क्वचित् २ तावत् सुबन्धुनामधेयं कर्णपथातिथी भवति धारा धराधरस्य महाराजभोजस्य त्रयोदशसभारत्नानाम् असौ अपि अन्यतमं रत्नम् ३० आसीद् इति [षोडशशतकभवेन] बल्लालेन प्रबद्धाद् भोजप्रबन्धाद् ज्ञायते । ११६८ तमे ख्रीष्टाब्दे उत्कीर्णे कनाडीभाषाशिलालेखविशेषे हि प्रमुखकाव्यकारतया अस्य

नामोल्लेखः अवाप्यते । अनेन ज्ञायते यद् 'ख्रीष्टद्वादशशताब्द्याः अवसानात् प्रागेव सुबन्धोः कीर्त्या दक्षिणा दिग् व्याप्ता आसीद्' इति[1] ॥

अथापि 'कः कालः सुबन्धोः?' इति प्रश्नः सम्यक् प्रतिवक्तुम् अशक्यः एव । अस्य कृतौ उपनिषद्रामायणमहाभारतपुराणमीमांसान्यायबृहत्कथाकामसूत्रसम्बन्धिषु जैनबौद्धसाहित्यस्पर्शिषु च नानोल्लेखेषु उपलभ्यमानेषु अपि तैः अस्य अधि- ५ जीवनकालं न कश्चिद् विशेषः प्रकाशम् आनीयते । अथ सुबन्धोः वासवदत्तायां छन्दोविचितिविषयकम् उल्लेखद्वयं[2] दृश्यते । यदि च छन्दोविचितिपदेन दण्डिनःग्रन्थविशेषः एव गृह्येत (न चैतद्ग्रहणावच्छेदकं प्रमाणं किमपि बलवद् दृश्यते), तर्हि दण्डिनः अर्वाचीनः खलु सुबन्धुः, इति उन्नीयेत । अपि च, वासवदत्तायाः आमुखे दशमपद्यस्य 'गतवति भुवि विक्रमादित्ये' इत्यंशात्, 'वासवदत्ताटीकाकृतः नरसिंह-१० वैद्यस्य 'कविरयं विक्रमादित्यसभ्यः; तस्मिन् राज्ञि लोकान्तरं प्राप्ते एतन्निबन्धं कृतवान्' इति वचनात् हाल Hall–महोदयेन प्रयुक्ते वासवदत्तायाः हस्ताङ्कितपुस्तके 'श्रीवररुचि[3]भागिनेयः सुबन्धुः, इत्यर्थकस्य वाक्यस्य दर्शनाच्च 'विक्रमादित्यस्य उत्तराधिकारिणः शासनकाले किल सुबन्धुः वासवदत्तां प्रणिनाय' इति सम्भाव्यते केवलम्, सुनिश्चयं तु न किञ्चिद् एतेभ्यः उल्लेखेभ्य एव स्थिरीकर्तुं शक्यते ॥ १५

'न्यायस्थितिमिवोद्द्योतकरस्वरूपां बौद्धसङ्गतिमिवालङ्कारभूषिताम्' इत्यत्र सुबन्धुना उद्योतकारस्य धर्मकीर्तिरचितस्य बौद्धसङ्गत्यलङ्कारस्य च यः परामर्शः कृतः स तु विषयेऽत्र किञ्चित्प्रकाशकरः प्रतिभाति । तथाहि उद्योतकारः धर्मकीर्तिश्च उभौ ख्रीष्टीयषष्ठशतकस्य उत्तरार्द्धे बभूवतुः । अतः 'सुबन्धुः षष्ठशतकस्य अवसानस्य पर्यये किल अभूद्' इति विचारः साधु प्रतिभाति । अथ 'बाणस्य हर्षचरितप्रणयनात्२० प्रागेव सुबन्धोः वासवदत्तायाः निर्माणम् अजनि' इत्यत्र तु न कश्चित् सन्देहोऽस्ति ॥

कथावस्तु—कन्दर्पकेतुर्नाम चिन्तामणिसुतः कथानायकः एकदा अष्टादशवर्षदेश्याम् अतिकमनीयां कन्यां काञ्चन स्वप्ने प्रत्यक्षीकृत्य ताम् अन्वेष्टुकामः मकरन्दाभिधेन आत्मनः सुहृदा सार्द्धं निभृतं स्वराजधानीतः निर्जगाम । यदृच्छयात् कालाद् अनन्तरं विन्ध्याद्रौ जम्बूनिकुञ्जे क्वचिद् एकदा निशायां शयानः कन्दर्पकेतुः२५

---

1. 'अनुरूप भर्तृगामिनीनां च वासवदत्तादीनां वर्णनेन ग्राह्योऽनुशयम्' इति दण्डिनो दशकुमारचरिते यो वासवदत्तानामोल्लेखो दृश्यते तेन भासप्रणीतस्य स्वप्नवासवदत्तस्य वासवदत्ता नाम नायिका अनुस्मर्यते न तु वासवदत्ता नाम सुबन्धोः कृतिः इति अनुमीयते । एवं च (प्रायेण ख्रीष्टात् प्राक् तृतीये शतके रचितेषु) पाणिनीयाष्टाध्याय्याः वार्तिकेषु 'वासवदत्तामधिकृत्य कृतो ग्रन्थः' (पा० ४, ३, ८७ तमस्य सूत्रस्य वार्तिके) इत्येवंरूपो यो वासवदत्ता परामर्शः कृतः सोऽपि नूनं भासस्य वासवदत्ताविषयकः इति ज्ञायताम् ॥

2. तत्र 'छन्दोविचितिरिव मालिनी सनाथा' इति, 'छन्दोविचिति भ्राजमानतनुमध्याम्' इति च (हाल महाशय सम्पादितायाः वासवदत्तायाः पृष्ठ ११२, २५ च) ॥

3. एष वररुचिः विक्रमादित्य सभारत्नमासीदिति श्रूयते किल ॥

जम्बूतरौ शारिकां प्रति रात्रौ बहिर्गमनात् स्वप्रत्यावर्तने विलम्बस्य हेतुं विवृण्वतः शुकस्य वचनानि निशम्य आत्मनः प्रेयस्याः नगरादिपरिचयं प्राप्तवान्। सा च कुसुमपुरप्रजानाथस्य शृङ्गारशेखरस्य वासवदत्ता नाम केवलम् अपत्यं किलासीत्। साऽपि च कन्दर्पकेतुवत् स्वप्ने कंचिद् युवानं विलोक्य तं मार्गयितुं तमालिकां नाम आत्मनो दासीं प्रेषितवती। अथ कुसुमपुरे द्वयोः प्रणयिनोः सङ्गमः समजनि। ५ ततोऽन्येद्युश्च विद्याधर राजकुमारेण पुष्पकेतुना वासवदत्तायाः विवाहः सम्पत्स्यमानः अभूत्, तस्माद् वासवदत्ता च कन्दर्पकेतुः च गगनोत्पतिष्णुम् अश्वमेकम् आरुह्य विन्ध्यमध्यं प्रविष्टौ। अथ प्रभाते वासवदत्तां लोचनागोचरीभूताम् आलोक्य कन्दर्पकेतुः तद्वियोगम् असहमानः यावद् मर्तुम् उद्युङ्क्ते तावद् 'अलं साहसेन, भूयस्ते तया सङ्गो भविष्यति' इत्यर्थिकाम् आकाशवाणीम् आकर्ण्य असौ स्वनिश्च-१० याद् विरमति। कतिपयमासानन्तरं स पाषाणरूपां ताम् उपलभ्य यावद् हस्तेन तां स्पृशति तावत् सा पुनः उज्जीवति। अथ सा तं विज्ञप्तवती यद् 'भवत्पार्श्वात् स्वस्वनायकार्थं माम् अपहर्तुं यदा द्वे सैन्ये मिथो रणे प्रवृत्ते तदा अहम् अज्ञानाद् निषिद्धस्त्रीजनप्रवेशे प्रदेशेऽत्र प्रविष्टा मुनिशापेन च पाषाणत्वं गता' इति। ततस्तौ कन्दर्पकेतोः पितूराजधानीम् आगत्य सुखेन तत्र प्रतिवसतः स्म॥ १५

वासवदत्तायां कथायाः लक्षणं यथा घटते न तथा आख्यायिकायाः। अस्याः हि विषयः कादम्बरीं यथा अनुहरति न तथा हर्षचरितम्। अन्यच्च, इह स्वप्नविश्वास-पक्षिभाषण - मायातुरङ्ग-शरीररूपपरिवृत्ति - शापफलादीनि कथायाः उपादानानि उपलभ्यन्ते॥

शैली— प्रत्यक्षरश्लेषमयः[1] कश्चित् काव्यग्रन्थः निर्मातव्यः इत्येवंरूपा२० ग्रन्थचिकीर्षा खलु वासवदत्तानिर्माणे प्रयोजिकाऽभूत्। सत्याम् अपि च कृतौ एतस्यां श्लाघ्यायां सावलेपतायां च कवेः अस्य मसारायाम्, आधुनिकानाम् अभिरुचिनिकषे परीक्ष्यमाणस्तु ग्रन्थ एष न सर्वथा दोषविवर्जितः तिष्ठति। कथापञ्जरो हि अस्य दुर्बलः, नानापटलैश्च वैपुल्यं बिभ्रद् भास्वरं वर्णनमेव इह यद्वा तद्वा सर्वमस्ति। कुमारीणाम् अङ्गलावण्यं, नायकस्य साहसिक्यं, वसन्तस्य मोहनत्वं२५ वनस्य मनोरमत्वं शिलोच्चयस्य लोचनचारुत्वं च अत्र अतिरमणीयतया वर्ण्यमानं विलोक्यते। प्रायेण पाठकान् परिश्रान्तान् भ्रान्तांश्च विदधत्या कृत्रिमया शैल्या कथागतं रामणीयकं विलुप्यते। किञ्च गौडीरीतिमयत्वाद् ग्रन्थस्य अस्य अत्र दीर्घसमासाः, क्लिष्टार्थाः पदोच्चयाः, महाकायाः शब्दाः, अनुप्रासादिशब्दालङ्काराश्च प्राचुर्येण प्राप्यन्ते। शब्दबलेन पाठकहृदयानि आवर्जयितुं कविना यथाऽत्र यतितं न३० तथा अर्थबलेन। श्लेषाद् अनन्तरं प्राधान्यवान् अलङ्कारोऽत्र विरोधाभासः खलु अस्ति। यथा 'विद्याधरोऽपि सुमनाः, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रितः',

[1] उक्तं च कविना स्वयं स्व विषये 'प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिः' इति (आमुखे पद्यं १३)॥

इत्यादौ । 'नायकेन कीर्तिः कीर्त्या सप्त सागराः, सागरैः कृतयुगादिराजचरितस्मरणम्' इत्यादौ च मालादीपकालङ्कारोऽपि बहुत्र दीप्यते ॥

एकेन प्रकारेण शैल्याः परमार्थमूलत्वेन अङ्गीक्रियमाणा प्रकरणानुरूपस्य तद्विस्तरस्य या धीः कवीनाम् आवश्यकी मता सा खलु वासवदत्तायां सर्वथा अविद्यमाना दृश्यते । अतिविस्तरम् अनानीय नैकोऽपि प्रसङ्गोऽत्र समाप्तः कविना । तथा- ५ हि किञ्चिद्वस्तुवर्णनावसरे वर्ण्यं यथासम्भवं पूर्णं विस्तारयन्नपि असन्तुष्टः इव कविः उपमाश्लेषाभ्यां तयोः एकतरस्य उभयोर्वा दीर्घपरम्पराम् अनुबन्धतया उपन्यस्यति । उपदेशप्रेरणादीनां प्रस्तावे उपस्थिते स एवार्थः प्रकारान्तरैः पुनः पुनरुच्यमानो लभ्यते । दोषश्च एष कवेः प्रत्युत्पन्नमतितायाः महावैदुष्याच्च कारणात् सञ्जायते । गद्यकाव्यान्तरेषु इव इहाऽपि कथायाम् कथान्तरं तावद् अनुस्यूतं प्राप्यते ॥ १०

## ५० बाणकृता कादम्बरी

बाणकृता कादम्बरी वक्ष्यमाणैः हेतुभिः अस्मान् प्रीणाति—

१ संस्कृतवाङ्मये विदितरचनाकालकाः ये अङ्गुलिगण्याः ग्रन्थाः सन्ति एषाऽपि तेषु परिगण्यते । तस्माद् भारतीय साहित्यदर्शनयोः इतिहासे बहुत्र अनया कालसीमा व्यवस्थाप्यते । १५

२ श्रेण्यसंस्कृते किंस्वरूपं गद्यं प्रमाणम् ? इति पृच्छतां 'यथा कादम्बर्याः' इति प्रतिवचनम् एतद्बलेन समर्थ्यते ।

३ गद्यकाव्येषु एषा च लोकचित्तानुरञ्जिनी सती भारतीयलोकप्रिय कथासाहित्यसम्पदं व्यवर्धयत् ॥

आत्मनः अपरा कृतिः (हर्षचरितम्) इव न कादम्बरी अपि बाणेन परि-२० समाप्तिम् आनीता किल । निर्वहणं तु कादम्बर्याः बाणसुतेन भट्टभूषणेन किल व्यधारि । जटिलं च अस्याः कथासूत्रं यत्र कथायां कथा अनुप्रविष्टा दृश्यते । भूयिष्ठं च कथायाः वक्ता तावद् एकः शुकः, यो हि स्वयं कथायाः उपनायकः पुण्डरीकनामा मुनिः आसीद् इति अन्ते गत्वा प्रकाश्यते । कथार्धं समाप्य कथानायिकायाः कादम्बर्याः वर्णनम् उपक्रम्यते तदैव च तस्याः नामधेयमपि प्रथमं श्रूयते । शूद्रको नाम नृपः २५ यं प्रति कथा वर्ण्यते, केवलं श्रोता आपाततः आभाति यस्य नाम्नोऽपि अकीर्तनेन न कापि कथाक्षतिः सम्भाव्यते ; अन्ततोगत्वा असौ एव तु शापवशाद् योन्यन्तरं प्राप्तः चन्द्रापीडो नाम कथानायकः स्म आसीद् इति रहस्यम् उद्भिद्यते । तदित्थं महती खलु कथावस्तुनिर्माणे विदग्धता कविना प्रदर्शिता यया यावत् कथावसानं न कदाचिदपि पाठकस्य रुचिशैथिल्यं सञ्जायते । अयं च तावत् कादम्बरीकथा३० सङ्क्षेपो भवति—

पुरा शूद्रको नाम कश्चिद् राजा बभूव । एकदा कापि चाण्डालकन्या

तत्सभाम् उपेत्य शुकम् एकं तस्मै उपाहरत्। नृपस्य प्रणयानुरोधात् स तम् आत्मनः कथाम् एवं श्रावयामास—"मत्प्रसवकाले माता मे पाञ्चभौतिकं देहम् अत्याक्षीत्, पिता च किञ्चित्कालानन्तरं लुब्धकैः कथाशेषताम् अनायि। महर्षेः जाबालेः शिष्येषु अन्यतमः विजने वने मां सहायहीनं भूपतितं विलोक्य करुणया आर्द्रचेताः सन् उत्थाप्य मां स्वगुरोः आश्रमपदं प्रापयत्। अथ महर्षिः मद्वृत्तान्तम् एवं स्वशिष्याणां समक्षम् अचकथत्—पुरा उज्जयिन्यां सर्वराजगुणोपेतः तारापीडो नाम नृपः भुवं शशास। विलासवती नाम तस्य महिषी स्त्रीगुणेषु लोके निरुपमा बभूव। शुकनासो नाम महामतिमान् तस्य अमात्यः आसीत्। प्रौढे वयसि नृपः शिवानुग्रहाद् एकं सुतं लेभे यस्य चन्द्रापीडः इत्याख्या चक्रे। चन्द्रापीडस्यैव समवयस्को वैशम्पायनो नाम शुकनासतनयः अभूत्। क्षणमपि अन्योन्येन विरहं सोढुम् अशक्नुवन्तौ वयसा वर्धमानौ तौ सर्वदा सह न्यवसताम्। अथ तयोः वेदारम्भकाले प्राप्ते राजधान्याः उपकण्ठे एव नृपेण गुरुकुलम् एकं प्रतिष्ठापितं यत्र अधीयानौ वयसः षोडशस्य वर्षस्य प्राप्तेः प्रागेव तौ सर्वविद्यास्थाननिष्णातौ जातौ। अथ शुकनासः अधीतसर्वकलाशास्त्रम् अपि चन्द्रापीडम् उपदिष्टवान्। तदनन्तरं तस्य यौवराज्याभिषेकः बभूव, पित्रा च तस्मै इन्द्रायुधो नाम महाद्भुतः तुरङ्गमः मात्रा च पत्रलेखाख्या विश्वासभूमिः सखी प्रादीयत। अथ दिग्विजयचिकीर्षया स्वनगरात् प्रस्थाय स त्रीणि वर्षाणि नानादेशान् जयन् एकदा द्वौ गन्धर्वौ अनुधावमानः अरण्यस्य कस्यचिद् मध्यं प्रविश्य परमरमणीयं सरः एकं प्राप्तः यत्र महाश्वेता नाम काचित् सुन्दरी तपःपरा बभूव। सा ताम् अवोचद् यद् अहं पुण्डरीकनाम्नि मुनि अन्वरज्यं स च मयि अन्वरज्यत्, परम् आवयोः अन्यतरेण अपि अन्योन्यस्य पुरः यावत् स्वहृदयानुरागः न प्रकाश्यते तावत् स लोकान्तरं व्रजति। अहं तु तस्यैव चिताम् आरुह्य तमेव अनु लोकान्तरं गन्तुम् ऐच्छम, परं काचिद् दिव्याङ्गना 'पुनर्नेन ते संयोगो भविष्यति', इति विश्वास्य तस्य देहं क्वचिद् अनैषीत्, इति। अथ महाश्वेता एव असामान्यसौन्दर्यवत्याः स्वसख्याः कादम्बर्याः यत् किञ्चिद् वृत्तम् तद् अवदत्॥

अथ कादम्बरीचन्द्रापीडयोः समागमे सति द्वयोः हृदये अन्योन्यस्य अनुरागेण आक्रान्ते। एतन्तरेण अपि तु अनुरागप्रकाशनात् पूर्वमेव पितुः सकाशात् आगतम् अपरिहार्यकार्यसन्देशम् उपलभ्य चन्द्रापीडः कादम्बरीं विषण्णां विहाय स्वयं च विषण्णहृदयेन स्वनगरं प्रत्याजगाम। चन्द्रापीडेन वियोगस्य दुर्भरं भरं वोढुम् असमा कादम्बरी यदा शरीरं त्यक्तुम् उद्यता अभूत् तदा पत्रलेखा नाम तत्सखी सान्त्वनैः तां तथाकरणात् यथाकथंचिद् निवार्य स्वयं चन्द्रापीडम् उपायतीय कादम्बर्याः कामजन्यां दशां च तस्मै यथावद् निवेदयाम्बभूव[1]॥

---

१. एषा खलु बाणलिखिताया कथायाः समाप्तिः। अग्रापि तत्सूनुना भूषणभट्टेन आरब्धा कथा प्रवर्तते॥

अथ कादम्बर्या सङ्गिगमिषु चन्द्रापीड' स्वनगरात् प्रस्थाय यदा तदेव सर अनु-
प्राप्त' यत्तीरे महाश्वेता तपश्चरन्ती न्यवसत् तदा तत्र वैशम्पायनम् अदृष्ट्वा
शोकार्णवे न्यमज्जत; वैशम्पायनो हि पुरा कादम्बरीनगरीं गच्छन्तं चन्द्रापीडम्
अननुगम्य तत्तीरे एव निवासे अभिनिविशमान' चन्द्रापीडेन तत्रैव आपृष्टो बभूव।
ततश्चन्द्रापीडे तदन्वेषणपर यदा महाश्वेतासन्निधिम् उपेत तदा सा तम् असू- ५
चयत् यत् कश्चिद् ब्राह्मणकुमार' माम् अकामयत, मया तु निषिध्यमानोऽपि मयि
राग प्रदर्शयन् कुपितया मया 'शुको भव' इति शप्त इति। तच्छ्रुत्वा चन्द्रापीड:
तत्क्षण सहसा प्राणान् तत्याज। अथ कादम्बरी तत्र आगता महाश्वेतातोऽपि
अधिक च शोकव्यथाम् अन्वभवत्। ततस्ते 'शापवशात् खलु चन्द्रापीड प्राणै
व्ययुज्यत। देहम् अस्य सरक्ष्यताम्। पुनरपि युवयो युष्मद्दयिताभ्यां सह सयोगो१०
भविष्यति' इति दिव्यां वाणीम् आकर्णयताम्। इन्द्रायुध. सर. अगाहत, तत्स्थाने च
पुण्डरीकमित्र कपिञ्जल' सरस निर्गत्य ते न्यबोधयत् यत् चन्द्रापीड चन्द्रमस,
वैशम्पायन पुण्डरीकस्य, इन्द्रायुधश्च मम अवतर खलु आसीद् इति॥

एव महर्षि मुखात् कथाश्रवणानन्तर खलु मम 'ननु अहमेव खलु प्राक्
पुण्डरीकावतरो वैशम्पायन अभवम्' इति बोधोदय समपद्यत। ततस्तु अहं चन्द्रा-१५
पीड मार्गयितु ततश्चलित मार्गे एव तया चाण्डालकन्यया धृत या माम् अत्र
आनीतवती॥"

अथो कथाशेषाद् ज्ञायते यत् चाण्डालकन्या सा पुण्डरीकमाता खलु आसीद्
या क्लेशान्तरेभ्य आत्मेन शुकग्रहणे आग्रह दर्शयामास, शूद्रकश्च चन्द्रापीडस्य
अवतर अभूद् इति। साम्प्रतं शापावधं प्राप्तवात् शूद्रकस्तत्क्षण शरीरम् उत्सृष्टवान्,२०
चन्द्रापीडश्च कादम्बरी भुजा-तराले शयान दीर्घस्वापाद् इव पुन उच्छ्वसितवान्
नचिरादेव पुण्डरीकोऽपि तत्र उपागत। तत चन्द्रापीड कादम्बर्या पुण्डरीकश्च
महाश्वेताया पाणिम् अपीडयत् सर्वांश्च दिश आनन्दपूरेण आप्लावयत्। तत प्रभृति
न कदाचिद् द्वाभ्याम् अपि मिथुनाभ्यां क्षणिकोऽपि वियोग अन्वभूयत॥

## साहित्यिकगुणा २५

साहित्यशास्त्रदृष्ट्या कादम्बर्यां प्रवेश कथासु हर्षचरितस्य च आख्यायि-
कासु उचित। कादम्बरी तु काव्यगुणै हर्षचरिताद् उत्कृष्यते तराम्। कादम्बरीमहा-
श्वेतयो अनुरागरसयो यादृश निपुण परस्परगुम्फ' दृश्यते तादृश अन्य-
भाषासु केषुचिदेव ग्रन्थेषु उपलभ्यते संस्कृते तु ग्रन्थान्तरे क्वचिदपि नैव। अस्याम्
अपि कादम्बरी रचनायां गद्यरूपायाम् अस्या रसपूर्णत्वाद् अलङ्कारबहुलत्वाच्च प्रा३०
भावत्वाद्वा रसिकैरभि 'काव्यम्' इत्यभिधीयते। रसश्च अङ्गी इह शृङ्गार, यस्य
दशानाम् अपि दशानाम् अपूर्वं खलु निबन्धन कविना अत्र यथाक्रम कृतम्। नहि
अस्य पूर्ववर्तिना वा परवर्तिना वा केनचिद् अपि कविना कृतिर्नाम कादृश ईदृशी

दशा निबद्धा । यत्र अनेन तु साऽपि सकलसहृदयहृदयहारिण्या रीत्या निबद्ध्य निदर्शिता । अङ्गरसेषु करुणाद्भुतौ प्रधानौ यौ नैकत्र अत्र अनुभूयेते[1] । अर्थालङ्कारेषु श्लेषस्य शब्दालङ्कारेषु च अनुप्रासस्य बहुल प्रयोग दृश्यते । कादम्बर्यां प्रयुक्ता यावदलङ्कारा अत्र परिसङ्ख्यातु न शक्या । यतस्तस्य संस्कृतकाव्यजगति कृतितमेषु कृतिकारेषु अन्यतम कादम्बरीकार इति कोविदा कथयन्ति । तथा च एवं त विषयी ५ कृत्य गोवर्धनाचार्येण—

'जाता शिखण्डिनी प्राग् यथा शिखण्डी, तथावगच्छामि प्रागल्भ्यमधिकमाप्तु वाणी वाणो बभूवेति ।' इति ॥

तस्य काव्यगुणान् उपश्लोकयता धर्मदासेनापि अभिहितम्—
'रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति । १०
तत् किं ? तरुणी, नहि नहि वाणी वाणस्य मधुरशीलस्य' । इति ॥

न केवल इयेतावदेव । जयदेवेन तु 'हृदयवसति पञ्चबाणस्तु बाण' इत्यपि उदितम् । अन्येऽपि च साहित्यविमर्शिन मर्मविद विविधाभि विधाभि बाणस्य रचनागुणान् प्राशंसिषु ।

बाणे वस्तुवर्णनस्य विलक्षणा विदग्धता, मानवहृदयदशा चित्रश्री प्रकृतिपर्यवे १५ क्षणपटी च तीक्ष्णा दृष्टि, स्वैर दूरविहारिणी हारिणी काव्यप्रतिभा च विभाव्यते । उत्तमानाम् इव नीचानाम् अपि पात्राणा व्यक्ति विशद व्यक्तं कृत्वा कादम्बरी कृता । नायिकोपनायिकयो हृदी विध्यन्त दुर्वारा काममार्गणगणा, तयो कन्योचिता लज्जा नायकोपनायकयो हृदिपरिगत अनुराग, तेन परस्पर गौरया अव्यभिचारिता चेत्यादिकस्य कृत्स्नस्य वर्णनम् अतीव रम्यम् । तथाहि कन्यानप्रणयिन प्राण २० त्यागो वर न तु प्रियाविराग । हिमवदच्छोदतडागाग्निनानामटविपर्यावर्णना चित्र विचित्रवर्णने कवे वास्तविक काव्यप्रकर्ष प्रकाशयन्ते । क्व च आडम्बरविभुता विभवविलासिनो वसुधाधिपा क्व च शान्तिभृत्ना विपिननिवासिनो मुनय इति वैषम्यम् अपि सम्यग् न्यरूपयद् बाण । वर्णन प्रस्तावेषु अस्य प्रतिभाया यावद्-वस्तु स्पृक्त्वाद् 'बाणोच्छिष्टं जगत् सर्वम्' इति आभाणक प्रसृत ॥ २५

अथ अपर कादम्बर्यां त्रिशिष्ट परिलक्ष्यमाण तद्रचनागुणविशेष तस्य भाषापाण्डित्यम् अस्ति येन असौ अप्रसिद्धान् क्लिष्टार्थान् इव शब्दान् व्यवहरते । दीर्घसमास श्लेषबहुलत्वाच्च कृति अस्य विदुषीणाम् अन्तरा दुरवगाहा एव । यान् कृतिम् आधुनिकी साहित्यसिद्धान्ततुलाम् आरोप्य दोषा एवम् आलोचयन्त लोक

1. करुणो यथा, स्वरूपतिमरणश्रवणानन्तरं कादम्बरी महाश्वेतयो क्रन्दनादिमरणावर्णनमनु चन्द्रापीडस्य च दशावर्णनेषु अद्भुतश्च यथा चन्द्रपुण्डरीकयो नानाजन्मवृत्तान्त वर्णनयो ॥

2 सा का ? इति मुख्यतर पाठ स्यात् ॥

पाश्चात्यः कटु किल आलोचयति रचयितारम्। एतच्च तन्मतेषु अनूदिततरं[1] यद् 'बाणस्य गद्यं खलु वङ्गारतीयम् अरण्यं नाम यत्र वृत्तोच्छेदं विना मार्गो न सुलभः, यत्र च बहवः अप्रतीतशब्दरूपाः दंदशूकाः तत्र प्रविविक्षून् प्रतीक्षमाणाः निभृतं स्थिताः' इति[2] ॥

कादम्बर्यां यथोचितप्रत्यङ्गपरिपोषस्य अभावो दृश्यते। नहि किमपि प्रकरणं ५ कविः तावत् समापयति यावत् तत्र वक्तव्यान्तरलेशशेषमपि पश्यति। तथाहि—'अस्ति उज्जयिनी नाम नगरी' इति साधारणे अर्थे विवक्षिते 'विशेषणेन विशेषणे विशेषिते, विशेषितविशेषणं पुनः विशेषणान्तरेण विशेष्यते; तदित्थं विशेषणसोपानपरम्परा पृष्ठद्वयं समाक्रम्य अवधिमधिगच्छति। क्वचित् क्वचिद् दैर्घ्येण एकसमग्रपङ्क्तिम् अपि अतिवर्तमानेन समासेन केवलम् एकं विशेषणपदम् उत्पाद्यते। चन्द्रापीडाय१० कृतः शुकनासोपदेशः सप्त पृष्ठानि व्याप्नोति। उपदेशोऽयं तावद् नैव उपसंह्रियते यावत् सर्वसम्भवविधाभिः अभिनववयसः राजकुमारस्य हृदये लब्धास्पदो न संपाद्यते। महांस्तु बाणस्य शैल्याः एष विशेषः यद् यथाविषयम् एषा विपरिवर्तते। तस्माद् रचनायाम् अस्य बहूनि स्थलानि सरलानि व्यक्तार्थानि च विलोक्यन्ते ॥

कादम्बरीकथायाः उद्गममूलम्—कादम्बरीकथावस्तुनः साधारणं बाह्यस्व-१५ रूपं सोमदेवेन (ख्रीष्टस्य एकादशशतकोद्भवेन) आरचिते कथासरित्सागरे समुपलभ्यमानस्य नृपसुमनसः कथाम् अत्यन्तम् अनुकरोति। कथासरित् सागरश्च गुणाढ्यकृतायाः बृहत्कथायाः संस्कृते संक्षेपः, बृहत्कथा च साम्प्रतम् अनुपलभ्यमानाऽपि बाणकाले उपलभ्यमाना आसीत्। तस्माद् 'बृहत्कथातः कादम्बर्याः साधारणकथाम् आदाय बाणभट्टः काव्यकलादृष्ट्या ताम् उपस्कर्तुं तस्यां तत्र तत्र विशेषम् उत्पाद्य२० तदङ्गानां यथायोग्यम् उपचयापचयौ विदधौ इति उन्नीयते ॥

स्वपरवर्तिषु कविषु बाणस्य प्रभावः

न खलु बाणस्य उदात्तगद्यकाव्यसदृशं गद्यकाव्यम् ईषत्करम् आसीत्। तेन बाणस्य परवर्तिनां कवीनां गद्यकाव्येषु अल्पीयांसः खलु काव्यगुणाः विलोक्यन्ते। बाणोत्तरभाविनः कवयः तस्य पदाङ्कान् अनुसर्तुं भृशम् अचेष्टन्त इति तु तावत्२५ तत्कृतिभिः स्पष्टं द्योत्यते। बाणस्य पद्व्यां पत्तुं प्रयतमानेषु पुरस्सरः धनपालो मन्तव्यः यः (ख्रीष्टस्य दशमशताब्द्यां) धाराधराधरस्य आश्रये विश्राम्यन् तिलकमञ्जरीम्[3] उद्ग्रथितवान्। तिलकमञ्जर्यां समरकेतु-तिलकमञ्जर्योः नायकनायिकयोः प्रेम-

---

१. दृश्यताम् एकचत्वारिंशत्खण्डे हर्षचरितवर्णनम् ॥

२. मतमिदं वेबरमहाशयस्य पीटरसनमहोदयेन स्वसम्पादितायाः कादम्बर्याः उपोद्घाते तावत् प्रस्तुतम् ॥

३. पैयलच्छि नाम प्राकृतकोषः (९७२-३ तमे ख्रीष्टाब्दे लिखितः) ऋषभपञ्चाशिका नाम जैनतीर्थंकरस्य ऋषभस्य प्राकृतस्तोत्रं च धनपालस्य अन्ये कृती ॥

कथा वर्णिता । अन्तरात्मस्वरूपेण शैलीस्वरूपेण च ग्रन्थोऽयं कादम्बरीम् अनुहरति इति यत् तत्तु ग्रन्थकारेण स्वयं निस्सङ्कोचम् अङ्गीकृतम् ॥

अथ धनपालाद् अनन्तरम् उल्लेखनीयः अज्ञातकालः वादीभसिंहोपाह्वः जैनः ओडयदेवः यस्य बाणरचनानुकारे गद्यचिन्तामणौ जीवनधरस्य उपाख्यानं निबद्धम्। एतदेव उपाख्यानं खलु जीवनधरचम्पूविषयोऽप्यस्ति ॥ ५

## ५.१ चम्पूः

चम्पूशब्देन साहित्ये गद्यपद्यमयं[1] काव्यम् अभिप्रेयते किल। विषयः अस्याः स एव यः गद्यकाव्यस्य । साहित्यदर्पणकारेण चम्प्वाः अपि तथैव साहित्याङ्गता अङ्गीक्रियते यथा कथायाः । उपलब्धचम्पूनां प्राचीनतमचम्पू निर्माणकालश्च खीष्टस्य दशमशतकं निश्चीयते ॥ १०

खीष्टस्य ९१५ तमे वर्षे राष्ट्रकूटवंश्यनृपेण इन्द्रतृतीयेन उत्कारितस्य नौसारीस्थस्य शिलालेखस्य लेखकः त्रिविक्रमभट्टः चम्पूकृत्सु प्रथमत्वेन तावद् अनुसन्धानवतां विदितः । अस्य ग्रन्थद्वयी अवाप्यते—दमयन्तीकथेत्यपरनाम्ना प्रसिद्धा (अपूर्णा) नलचम्पूः, मदालसाचम्पूश्च । द्वयोः गौडीरीतिनिबद्धत्वात् तत्र दीर्घसमासानां श्लेषाणाम्, अनुप्रासानां निरवधिविशेषणानां दुरूपदानां च बाहुल्यं विलोक्यते ।१५ सर्वत्र शब्दसौन्दर्ये यथा बद्धादरः दृश्यते कविः न तथा अर्थनैर्मल्ये । कतिचित्तु अस्य पद्यानि परमार्थेन रमणीयानि भान्ति । अधोऽवतार्यमाणं पद्यं सुभाषितावलीषु अस्य नाम्ना सङ्गृहीतं दृश्यते—

'अप्रगल्भपदन्यासा जननीरागहेतवः ।
सन्त्येके बहुलालापाः कवयो बालका इव' ॥ इति ॥ २०

अथ दशमशतके एव ९५९ तमे खीष्टाब्दे जैनसोमदेवेन गुणैः नलचम्पूम् अतिशयाना यशस्तिलकचम्पूः विरचिता यस्याः सर्वं कथावस्तु वस्तुतः मनो हरति । 'कान्तासम्मिततया' जैनधर्मोपदेशं चिकीर्षुणैव कविना अस्याः निर्माणं कृतम् इति प्रतिभाति; यतो मारिदत्तो नाम नृपः अस्याः नायकः, यः यत्र एकः बालकः एका बालिका च स्यात्, तादृशं जीवमिथुनम् एकं गृहदेवतायै चण्डमार्यै बलिं२५ हर्तुम् ऐच्छत्, अन्ततः स्वप्रजाभिः सार्द्धं जैनधर्मदीक्षाम् आप । अस्य कतिचित् श्लोकाः असंशयं मनोहराः सन्ति । यथा—

'अवक्ताऽपि स्वयं लोकः कामं काव्यपरीक्षकः ।

---

१. चम्प्वां हि गद्यपद्ये उभे कथावाहने भवतः । पञ्चतन्त्रादिषु साहित्यस्य अंगान्तरेषु तु यत्र यत्र गद्यपद्यद्वयप्रयोगः दृश्यते तत्र तत्र पद्यानि नीत्युदाहरणानि वा वक्ष्यमाणकथासंसूचकानि वा वर्ण्यार्थं प्रभावस्य उत्कर्षाधायकानि वा क्वचित् निबध्यमान रसभावविशेषस्य चमत्कृति विवर्धनानि वा खलु भवन्ति ॥

रसपाकानभिज्ञोऽपि भोक्ता वेत्ति न किं रसम्' । इति

हरिचन्द्र[1] जैन कृता जीवनधरचम्पूरपि दशमशतकस्यैव इति सम्भाव्यते । गुणभद्रस्य उत्तरपुराणाद् गृहीतम् अस्याः कथावस्तु न पाठकमनो रञ्जयति ॥

यद्यपि सन्ति भोजप्रणीतत्वेन प्रसिद्धा रामायणचम्पू', अनन्तेन रचिता भारतचम्पूः, सोड्ढलस्य (१००० समयोद्भवस्य) च उदयसुन्दरीकथाचम्पूः, अन्याः ५ अपि च बहवः चम्पवः, अथापि हीनगुणत्वाद् नैताः अत्र वर्णनार्हाः भवन्ति ॥

---

१. एतत्तु सम्भाव्यं सम्भावनीयं यदेष एव खलु (२१ सर्गात्मकस्य) जैनग्रन्थस्य धर्मशर्माभ्युदयस्यापि प्रणेतेति ॥

# अथ नवमोऽध्यायः ।

## लोकप्रियाः कथाः

## ५२ गुणाढ्यस्य बृहत्कथा

भारतीयसाहित्ये लोकप्रियकथा[1] विषयकः प्राचीनतमः ग्रन्थः गुणाढ्यस्य बृहत्कथाऽस्ति। एषा पैशाचीभाषायाम् उपनिबद्धा आसीत् साम्प्रतं च अप्राप्याऽस्ति। अथाऽपि अस्याः रूपान्तरेभ्यः काश्मीरिकयोः क्षेमेन्द्रसोमदेवयोः बृहत्कथामञ्जरी-कथासरित्सागराभ्यां नैपालिकस्य बुद्धस्वामिनः बृहत्कथाश्लोकसंग्रहाच्च एतत्स्व-रूपस्य एतत्कर्तृजीवनकथायाश्च कियान् इव परिचयः प्राप्यते ॥

(क) गुणाढ्यस्य चरितपरिचयः ।

काश्मीरिकग्रन्थाभ्यां ज्ञायते यद् गोदावर्याः तीरे प्रतिष्ठाननगरं किल गुणाढ्यस्य अभिजनः बभूव, तस्मिंश्च नृपसातवाहनः भृशम् अस्निह्यत्। एकदा वारि-विहारक्षणे 'मा उदकैः' इत्यभिसन्धाय महिष्या उच्चारितं 'मोदकैः' इति संहितपदम् अनधीतसंस्कृतभारतीकः क्षितीशः 'मोदकैः' इत्यसंहितपदत्वेन गृहीत्वा अतिमात्रं वै-लक्ष्यम् अवाप। अथ नृपस्य सहसा संस्कृतं पिपठिषा बलवद् उदियाय। षड्भिः वर्षैः अहम् अत्र भवतः संस्कृतभाषाभिज्ञानं निर्वर्तयितुं प्रभवामि इति गुणाढ्यकथनं निशम्य (कातन्त्रव्याकरणप्रणेता) शर्ववर्मा सोल्लुण्ठम् अवोचत् 'षड्भिः मासैरेव खल्वहं संस्कृतम् अध्यापयितुं शक्नोमि' इति। 'अशक्यं कर्तुम् एष प्रतिशृणोति' इति मत्वा गुणाढ्यस्तु प्रसह्य 'यदि हि असौ यथाप्रतिज्ञातं कृत्वा प्रदर्शयेत् तदा अहं संस्कृतं प्राकृतं प्रसिद्धं भाषान्तरं वा कदापि न प्रयुञ्जीय,' इति पणं कृतवान्। अथ नैतद् वचनम् अपेक्षते यद् गुणाढ्यः किल पणं हारितवान्। पणहारणानन्तरम् असौ मध्येविन्ध्यम् एकत्र निवासं विरच्य पिशाचानां भाषायां बृहत्तं ग्रन्थम् एकं निर्मातुं प्रवृत्तः। सप्तलक्षश्लोकात्मकं ग्रन्थम् इमम् तच्छिष्याः नृपसातवाहनस्य सकाशम् अनैषुः, नृपश्च निष्प्रश्रयम् एनं प्रत्याख्यातवान्। एतद् आकर्ण्य गुणाढ्यः भूरिविषादम् उपागच्छन् स्वम् अभितः स्थितान् आरण्यान् पशून् परिगणय्य स्व-ग्रन्थम् उच्चैः पाठेन श्रावयन् तम् अग्निसात् कर्तुम् आरब्धः। एतर्हि ग्रन्थस्य आय गुणान् उपश्रुत्य नृपसातवाहनः तं रक्षितुं प्रयतमानः तस्य सप्तमांशं (लक्षं श्लोकानां) केवलं पातुं प्राभवत्। स एष सप्तमांशः बृहत्कथेत्याख्यायते ॥

---

१. ईदृश्यो हि कथाः यथा साधारणजनेषु लब्धप्रचाराः सन्ति न तथा उच्चवर्गेषु। अद्यत्वेऽपि प्रदोषे शिशवो वृद्धकुटुम्बिनीं परितो निषीदन्ति, सा च तान् [illegible] मनो-रञ्जिन्यो लोकप्रचारिताः कथाः श्रावयति ॥

नेपालिक बुद्धस्वामिनो बृहत्कथाश्लोकसंग्रहे तु गुणाढ्य जीवनवृत्तान्तः अन्यथैव उपलभ्यते । तदनुसारं तु गुणाढ्य' मथुरायाम् अभिजातः अवन्तिपतेः नृपमदनस्य च आश्रये न्यवात्सीत् । गुणाढ्यस्य द्विविधयोः पूर्वोक्तयोः सूक्ष्मपर्यालोचनं लिङ्गयति यद् नैपालिकेन वर्णिताद् जीवन वृत्तान्तात् काश्मीरिकाभ्यां वर्णितः जीवनवृत्तान्तः सत्यत्वे अतिरिच्यते, इति । अथ यथासम्भवं नेपालदेशस्य नेदिष्ठः खलु गुणाढ्य- ५ स्य अभिजनः उपन्यसनीयः इति मनीषया वै बुद्धस्वामी तथा उपन्यस्तवान् इति सम्भाव्यते ॥

(ख) वाङ्मये गुणाढ्यविषयाः उल्लेखाः—अद्यावधि गुणाढ्यविषयः प्राचीनतमः उल्लेखो दण्डिनः काव्यादर्शस्थः केवलः पुराविदां विदितः । सुबन्धुना तस्य नामधेयं स्ववासवदत्तायां स्मृतम् । बाणोऽपि हर्षचरिते कादम्बर्यां च तत्कीर्तिं कीर्त-१० यति । बाणपरभाविनां तु ग्रन्थकाराणां ग्रन्थेषु प्राचुर्येण एतद्विषयकाः उल्लेखाः उपलभ्यन्ते । त्रिविक्रमभट्टस्य सोमदेवस्य च चम्प्वोः, गोवर्धनस्य सप्तशत्यां ८७५ तमे ख्रीष्टाब्दे उत्कीर्णे कम्बोदिया देशस्थे शिलालेखविशेषे च गुणाढ्य नामोल्लेखः प्राप्यते॥

(ग) बृहत्कथा वर्ण्यांशानां साधारण स्वरूपम्—केचित्तु रामायणकथाम् अनुसृत्य खलु गुणाढ्येन स्वग्रन्थकथा उत्पादिता इति मन्यन्ते; तथाहि, यथा रामायणे१५ सीतालक्ष्मणाभ्याम् अनुगतः रामः वनं प्रव्रजति, वने सीतया वियुज्यते, लक्ष्मणद्वितीयः पुनः सीतां प्रत्याहरति, अयोध्याराज्यं च विन्दति, तथैव बृहत्कथायाम् अपि नायको नरवाहनदत्तः वेगवतीगोमुखाभ्याम् अन्वीयमानः प्रव्रजति, वेगवतीविप्रयोगं प्राप्नोति, नानाविक्रान्तकर्मकरणानन्तरं गोमुखसहायः नायिकां मदनमञ्जुकां विद्याधरराज्यं च विन्दते । किञ्च, रावणहस्तगतायाः सीतायाः इव अपहर्तुः मानसवे-२० गस्य गृहे बन्दीकृतायाः मदनमञ्जुकाया अपि पातिव्रत्यम् अक्षतम् अतिष्ठद्, इति महद् उभयोः साम्यं निशाम्यते । न च गुणाढ्यो रामायणं महाभारतं बहूनि बौद्धोपाख्यानानि च अधिजगे इत्यत्र कश्चित् सन्देहोऽस्ति । वस्तुतस्तु उदाहृतपूर्वं रामायण बृहत्कथयोः सादृश्यं शरीरपिण्डस्य केवलस्य अवलोक्यते अङ्गसन्निवेशे तु महद् वैषम्यं तयोरस्ति । स्थानिकीः लौकिकीः वार्ताश्च यात्रिकाणां सकाशात् श्रुताः२५ कथाश्च उपादाय गुणाढ्येन गोमुखनरवाहनदत्तयोः विक्रान्तयात्रावर्णनानि उपनिबद्धानि इति प्रतिभाति । वर्णनानि इमानि श्रमजीविनां पोतकर्णधाराणां वाणिज्यावृत्तिकानां पथिकानां च वर्गेभ्यः अतिशयेन मनोरञ्जनानि सन्ति । ग्रन्थस्य अस्य निर्माणे साधारणजनसमवायमनोरञ्जकस्य पैशाचीभाषामयस्य साधारणसाहित्यसन्दर्भस्य उत्पिपादयिषा एव प्रयोजिका अभूत्, न तु कस्यचिद् ऐतिहासिकस्य पौ-३० राणिकस्य वा नृपस्य संस्कृतभाषानिबद्धस्य चरितस्य जिज्ञासा वा उच्चवर्णजनशिक्षाकरस्य आचारशास्त्रस्य चिकीर्षा वा । महती ननु गुणाढ्यस्य उपज्ञाशक्तिः अभूत् । यतस्तस्य बृहत्कथया सह साजात्यं बिभ्रद् ग्रन्थान्तरं दृष्टिपथं न गच्छति ॥

पात्राणां व्यक्तयो विशदं स्फुटीकृताः गुणाढ्येन, तस्माद् न केवलम् उत्तम-पात्राणाम् अपितु नीचपात्राणाम् अपि प्रतिस्वं व्यक्तयः पृथक् पृथग् उल्लसन्ति। बुद्धो वा चक्रवर्ती नृपो वा खलु एष भविष्यति इति पिशुनयद्भिः जन्मना एव द्वात्रिंशच्छुभ-लक्षणैः उपेतः नरवाहनः गुणैः उदयनम् नाम स्वपितरम् अतिशेते; न्यायावतरः इव स आभाति। राजधर्मज्ञः प्राज्ञः व्यवहारदक्षश्च खलु गोमुखोऽस्ति यो वैकर्तिनना अना-रूयेन यौगन्धरायणेन साम्यम् अर्हति। नायिका मदनमञ्जुका च मृच्छकटिकस्य नायिकया वसन्तसेनया सदृशसन्निभा विभाति॥

(घ) रचना (गद्यरूपा वा पद्यरूपा वा)—ननु गद्यमयो वा पद्यमयो वा गुणा-ढ्यग्रन्थः आसीद् इति तावत् सम्यग् विवेचयितुं न शक्यम्। अस्य हि या रूपान्तर-त्रयी उपलभ्यते सा सर्वा पद्यमयी एव। तेन अनुमीयते यत् पद्यमयी खलु बृहत्कथा आसीद् इति। श्लोकानां सप्तलक्षीं किल गुणाढ्यः व्यरचयद् यस्याः सप्तमांशः केवलः ज्वलनमुखप्रवेशाद् विशांपतिना सातवाहनेन त्रातः, इति हि बृहत्कथाजन्म-कथाऽधिकारे काश्मीरिककृतिभ्यां ज्ञायते। कथां लक्षयता[1] दण्डिना तु गद्यमयत्वं कथालक्षणवटकविशेषं संदर्श्य बृहत्कथा उदाहृता। दण्डिनः पर्याप्तप्राचीनत्वे च तस्य मतं कथं नु सहसा उपेक्षितव्यम्; तस्मिन् यस्मिन् वा रूपे विद्यमाना बृहत्कथा दण्डि-ना स्वयं विलोकिता स्याद् इत्यपि च सम्भाव्यते। हेमचन्द्रोऽपि बृहत्कथातः गद्य-खण्डविशेषम् उद्धरति इत्यनेनापि यद्यपि दण्ड्युक्तं पोष्यते, तथापि न हेमचन्द्रस्य अर्वाचीनतया (द्वादशशताब्दीभवतया) न तदुल्लेखः पूर्णप्रमाणं भवति॥

(ङ) पैशाचीभाषादेशः—पैशाचीभाषायां गुणाढ्यः बृहत्कथां विरचयांचकार इति तावत् प्रसिद्धम्। बृहत्कथायाः काश्मीरिकरूपान्तराभ्यां च गोदावरीतीरस्थितप्रतिष्ठान-नगरवास्तव्यः गुणाढ्यैः विन्ध्यमध्ये एतां प्राणैषीद् इति विदिताद् वृत्ताद् 'विन्ध्य-भाषाप्रभेदः खलु पैशाची' इति लभ्यते। सर जार्जग्रियर्सन (Sir George Grierson) महोदयस्तु भारतस्य पश्चिमोत्तरप्रदेशान् पिशाचभाषाभूमित्वेन निश्चिनोति। मन्यते हि प्राचीन पैशाचीलक्षणानि साम्प्रतं काफिरिस्तान्-चित्राल-गिलगित-स्वात-अनरदेष स्थ(?) ... भाषासु सुतरां घटन्ते। एतासु हि भाषासु दकारादि कोमलाक्षराणां टकारादिकठोराक्षरादेशाः भवन्ति'। ईदृशा देशप्रवृत्तिः परं विन्ध्यभाषासु अपि दृश्यते। लैकोटे (Lacote) महोदयस्तु 'केचिद् पश्चिमोत्तरदेशा काश्यपकान्तिभ्यां प्रकाशाद् ननु गुणाढ्येन एषा पैशाची भाषा प्रयोगा स्याद्' इति मतम् उपदिशति करोति न सा व्याख्यातोऽपि स्वीकार्या प्रतिभाति। भवति च पश्चिमोत्तरभारतीयजन-पदभाषासु पैशाचीभाषायां च सहाऽप्रयोगः भेदः। तथाहि पैशाचीभाषायाम् एव

1. अपादः पदसन्तानो गद्यमाख्यायिका कथा।—
   इति तस्य प्रभेदौ द्वौ........................॥ काव्यादर्श १, २३॥
   भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्॥ काव्यादर्श १, ३३।

एव सकार (Sibilant) ध्वनिः श्रूयते। पश्चिमोत्तरप्रदेशीयभाषासु च अशोककालाद् आरभ्य विभिन्नाः सकारत्रयध्वनयः श्रूयन्ते । गुणाढ्यः कदाचित् पश्चिमोत्तरप्रदेशान् अध्युवास इत्यत्र च नैकमपि प्रमाणम् उपलभ्यते । अथ राजशेखरवचनाद् ज्ञायते यद् भारतस्य येषु अनेकेषु खण्डेषु पैशाचीप्रचारः अभूद् विन्ध्यभूभागोऽपि तदन्तर्गत आसीद् इति । तस्माद् 'विन्ध्यभाषाप्रभेदः खलु पैशाचीभाषा बभूव' इति ५ पक्षः एव बलीयान् इति प्रतिभाति ॥

(च) कालः —दण्डिनः काव्यादर्शे भूतभाषामयीं बृहत्कथाम्' इत्युल्लेखदर्शनात्, सुबन्धुना बाणेन च एतन्नामग्रहणात् 'ख्रीष्टस्य षष्ठशतकात् पूर्वभवा खलु बृहत्कथा' इति निर्विवादं सिध्यति। 'अपि नाम बृहत्कथायां मदनमञ्जुकाचरितम् अधीत्यैव मृच्छकटिककृता वसन्तसेनायाः चरितम् आरचितम्' इत्यपि उन्नीयते।१० किन्तु स्वयं मृच्छकटिककृतोऽपि कालः संशयान्मुक्तो नास्ति। 'सातवाहनराज्यकाले किल गुणाढ्योऽभूत्, तस्मात् ख्रीष्टस्य प्रथमं शतकं तस्य समयः, इति यत् लैकोटः (Lacote) सम्भावयति, अन्ये तु 'सातवाहनस्य केवलं वंशविशेषवाचकत्वात् नैषा संज्ञा कस्यचिद् अर्थस्य साधकं बाधकं वा प्रमाणं भवितुमर्हति' इति वदन्तः न तदपि सहन्ते। कातन्त्रव्याकरणकारस्य शर्ववर्मणः समसामयिकतया गुणाढ्यस्य अस्य १५ खीष्टप्रथमशतकानन्तरम् अपि कश्चित् कालः सुसम्भवति ॥

(छ) बृहत्कथायाः महत्त्वम् —(१) न केवलम् लोकप्रियकथासाहित्ये प्रथमा कृतिः, इत्येतावता एव बृहत्कथा गौरवम् अर्हति, अपितु एषा भारतीयसाहित्यिककलायाः महान् भाण्डागारः खल्वासीत्' इत्यतोऽपि ॥

(२) एतदनन्तरं लब्धोदये संस्कृतसाहित्ये अस्याः यः प्रभावः पतितः स २० केवलं रामायणमहाभारतयोः एव प्रभावम् अनु इयम् अक्षय्यनिधिः खलु गुणाढ्योत्तर भाविनां कवीनाम् अभवद् ये एतदन्तरालाद् यथेच्छं विविधविधकथावस्तूनि अवचिन्वन्ति स्म ॥

(३) भारतेतिहासस्य यः कालभागः साधनान्तरैः अप्रकाश्यमानः तं विषयी कुर्वन्त्यो बृहत्कथायाः कथाः आलोचकलोचनेन यदि आलोचिताः स्युः तदा तदानी-२५ न्तन्याः दर्शनधारायाः सम्प्रदायाश्च इतिवृत्तम् अपि सुतरां प्रकाशयेयुः ॥

(४) भारतीयसाहित्यविकासक्षेत्रेषु परमविशिष्टां सीमानं बृहत्कथा खलु बद्-घोनयति ॥

## ५३ बुधस्वामिनः श्लोकसङ्ग्रहः [अष्टमं नवमं वा शतकम्]

बुधस्वामिनः कृतेः पूर्णं नामधेयं बृहत्कथाश्लोकसङ्ग्रहः इत्यस्ति। तद् ३० बृहत्कथायाः सङ्क्षेपेण श्लोकसङ्ग्रहेण वा अनेन भवितव्यम्। अस्य खण्डः केवलम् एकः अस्ति। अस्य मन्यः पूर्ति नीतो वा न वा इत्यपि वयं सम्प्रधारयितु

अशक्यम् । अस्य हस्तलिखितानि पुस्तकानि नेपालदेशे अवाप्तानि तस्माद् बृहत्कथायाः नैपालिकं रूपान्तरम् एष सङ्ग्रहः इति वदन्ति, अस्य ग्रन्थस्य वा कर्तुर्वा नेपालदेशेन सम्बन्धसाधकं तु न किञ्चित् प्रमाणम् उपलभ्यते । अष्टमं वा नवमं वा शतकं हास्य प्रणयनकालः इत्यपि च वदन्ति ॥

उपलब्धस्य अस्य श्लोकसङ्ग्रहस्य खण्डात्मके हस्ताङ्किते पुस्तके २८ सर्गाः ५ ४५३६ श्लोकाश्च सन्ति । एतच्छ्लोकसङ्ग्रहकारेण यस्मिन् तस्मिन् वा रूपे विद्यमाना बृहत्कथा स्वयम् अवलोकिताऽऽसीद् इति प्रतिभाति । उदयनकथाभिज्ञाः खलु पाठकाः इति प्रकल्प्य स क्रमेण नरवाहनदत्तस्य शृंगारमयानि वीर्यकर्माणि वर्णयितुम् आरभते । काश्मीरिकग्रन्थाभ्यां सह अस्य सङ्ग्रहस्य तुलनात्मकाध्ययनेन विषयस्य अन्तरात्मस्वरूपे आनुपूर्वीस्थापने अङ्गप्रत्यङ्गप्रसारणे च अस्य ताभ्यां महान्१० भेदः उद्भिद्यते । अपि च, काश्मीरिकग्रन्थयोः अवास्तविकाः अपि केचिद् अंशाः लब्धप्रवेशाः दृश्यन्ते । अस्ति हि तत्र पञ्चतन्त्रस्य संस्करणविशेषस्य कियतीनां कथानां सम्पूर्णायाः वैतालपञ्चविंशतिकायाश्च समावेशः । बुद्धस्वामिनः श्लोकसङ्ग्रहोपलब्धेः प्राग् 'वास्तविकी बृहत्कथा एव काश्मीरिकग्रन्थयोः न्यूनाधिकं मूलम्' इति या धारणा आसीत् सा सम्प्रति सर्वथा विपर्यासं याता । तदेतद् ग्रन्थत्रयस्य१५ समानानां स्थलानाम् अनुशीलनेन ज्ञायते यत् क्षेमेन्द्र सोमदेवौ बुद्धस्वामिनः सन्दर्भम् अधीत्य स्वस्वग्रन्थे तं सञ्चिक्षिपतुः इति । एतत्तु न्यूनान्न्यूनम् असंशयं वक्तव्यं यत् काश्मीरिकग्रन्थयोर्न बहूनि उपाख्यानानि अप्राकरणिकानि, बुद्धस्वामिनः श्लोकसंग्रहबलेन कृतं व्याख्यानं विना अस्फुटार्थानि च खलु सन्ति ॥

ननु तर्हि बृहत्कथाबाह्यानां कथानां काश्मीरिकग्रन्थयोः प्ररोहः कुतः ? इति२० चेत्, निमित्तद्वयम् अस्य सम्भाव्यते । प्रथमं तावत् प्रक्षेपैः समुपबृंहिता एव सा बृहत्कथा कश्मीरान् प्राप्ता स्याद् यत्र पञ्चतन्त्रस्य कतिपयकथानां समग्रायाः वैतालपञ्चविंशतिकायाश्च पूर्वमेव समावेशः आसीत्; द्वितीयं च संक्षेपकाराभ्यां स्वकर्तव्यं सम्यग् अबुद्ध्वा एव औचित्यसीमा अतिक्रान्ता स्याद् इति ॥

शैली—श्लोकसङ्ग्रहस्य शैली सरला, प्रसन्ना, स्वच्छा च । यदि हि अस्य२५ शैली ईदृशी नाभविष्यत् तदा एष लोकप्रियग्रन्थो नाभविष्यत् । अस्य पात्राणां व्यक्तयः प्रतिरूप स्फुटावयवाः सुदर्शनाश्च सन्ति । अत्र प्रतिवाक्यार्थं निसर्गानुविधायिता विलोक्यते । ग्रन्थावलोकनाद् 'विपर्यटनेन तं तं जनपदं स्वयं विलोक्य एव बुद्धस्वामिना तत्तत्स्थानवर्णनम् अकारि' इति भासते । उपजीव्यग्रन्थस्य आचारदृष्टिः अपि इह अधिकतरोज्ज्वलीकृताऽस्ति । प्राकृतपदानां प्रयोगेण अस्य भाषायाः विशिष्टं लक्षणं३० निर्वर्त्यते । व्याकरणकुशलः एष बहुशः लुङं प्रायुङ्क्त ॥

## ५४ क्षेमेन्द्रनिर्मिता बृहत्कथामञ्जरी [१०६३-६]

बृहत्कथामञ्जरीतिनामधेयेन एष 'बृहत्कथायाः सङ्क्षेपः खलु एषा' इति

सूच्यते। क्षेमेन्द्ररचिताभ्यां रामायणकथामञ्जरी भारतमञ्जरीभ्यां ज्ञायते यद् एष मूलम् अविकुर्वन् ग्रन्थान् सङ्क्षिपति इति। कथासरित्सागरे २१३८८, परं बृहत्कथामञ्जर्यां केवलं ७५०० पद्यानि प्राप्यन्ते। असकृत् सङ्क्षेपकलायाः दूरम् आकर्षणाद् अस्य मञ्जरी शुष्का, निष्प्राणा, अरम्या, प्रायेण तिरोहितार्था च जाता, यस्याः अनेके अंशाः कथासरित्सागरावगाहनानन्तरं केवलम् अवगाह्याः सन्ति। काव्यकलाऽभ्यासार्थम् एव असौ एताः मञ्जरीः अप्रणैषीद् इति सम्भाव्यते। इत्थंगते यौवने एव स बृहत्कथामञ्जरीं व्यरचयद् इति फलितं स्यात्, परं सङ्क्षेपकरणमात्रे क्षेमेन्द्रस्य कौशलम् इति तु तावद् न मन्तव्यम्। अवसरं प्राप्य पेशलया उदारया च शैल्या वस्तुवर्णनं विधाय आत्मनः वर्णनशक्तिम् अपि स सहर्षं प्रकाशयति। मञ्जरी एषा १०६३ तमे संवत्सरे आरब्धा भूत्वा १०६६ तमे वर्षे समाप्तिम् अगमत्॥

वर्ण्यार्थदृष्ट्या बृहत्कथामञ्जरी कथासरित्सागरेण अत्यन्तं सादृश्यं प्रदर्शयति। उभौ अपि सन्दर्भौ समाने समये समाने देशे समानं च ग्रन्थम् उपजीव्य प्रादुर्भूतौ। मञ्जर्याः अस्याः लम्भकाख्येषु (सम्भवतः लम्भकशब्देन अत्र विक्रान्तयात्रा वा विजयो वा विवक्षितः) अष्टादशसु भागेषु कथापीठाभिधे प्रथमे भागे गुणाढ्यस्य बृहत्कथायाः उत्पत्तिकथा वर्णिता, द्वितीये तृतीये च उदयनस्य चरितं तेन पद्मावती प्राप्तेश्च इतिवृत्तं निबद्धं, चतुर्थे नरवाहनदत्तस्य जन्म वर्णयित्वा शेषेषु नरवाहनदत्तस्य विविधाः विक्रान्तप्रणयकथानां नायिकया मञ्जुकया निरवधि-संयोगस्य विद्याधरराज्यप्राप्तेश्च वर्णनं कृतम्। उपाख्यानबाहुल्ये ग्रन्थेऽस्मिन् मूलकथासूत्रं मुहुर्मुहुः अदर्शनं याति। कतिचिच्च उपाख्यानानि नितरां सरसानि हृद्यानि च सन्ति। षष्ठे लम्भके सूर्यप्रभायाः उपाख्याने लोकवार्ता-वैदिकपुराणकथा-बौद्धपुराणकथानां परस्परं मिश्रणेन आत्मनः किमपि महत् कौशलं दर्शितं कविना। पञ्चदशे लम्भके एकस्य जिगीषोः कथा वर्णिता यः श्वेतद्वीपविजयाय अभियाति। अत्रैव विलक्षणकाव्यशैल्यां नारायणस्तुतिः निबद्धा। एतद्वीरकथा महाभारतगतया श्वेतद्वीपकथया तुलाम् आरोहति॥

## ५५ सोमदेवोत्पादितः कथासरित्सागरः [१०८१ ८]

कथासरित्सागरस्य परिमाणं बृहत्कथामञ्जर्याः परिमाणस्य त्रिगुणं होमर (Homer) -विरचितयोः ओडिसी-इलियडाभिधयोः (Illiad and Odyssey) काव्ययोः परिमाणस्य च द्विगुणकल्पं वर्तते अस्य निर्माणकालः[1] आ १०६३ तमाद् अब्दाद् आ १०८१ तमाब्दं निश्चीयते यः क्षेमेन्द्रकृतायाः बृहत्कथामञ्जर्याः कालम् ईषदन्तरेण अन्वेति। काश्मीरनरेशस्य अनन्तस्य महिष्याः सूर्यमत्याः मनोविनोदार्थं किल सोमदेवो नाम काश्मीरिकपण्डितः एतद्ग्रन्थनिर्माणम् अकार्षीत्। १०८१ तमे संवत्सरे आत्मघातं कृतवता नृपेण सह परलोकं जिगमिषुः सूर्यमती चितिम् आरोहत्॥

१. एतादृशस्य मान्यागारेव काव्यस्यार्थोऽपि प्राप्यते इति सम्भु क्षेमेन्द्रः प्रणीतवान्॥

सोमदेवकथासरित्सागरः (क्षेमेन्द्रीयबृहत्कथामञ्जरीवत्) लम्भकाख्येषु अष्टादशसु भागेषु तरङ्गनामकेषु १२४ उपभागेषु संविभक्तोऽस्ति[1]। आपञ्चमलम्भकान्तं मञ्जरीसागरयोः पर्यार्थक्रमः अभिन्नः। अग्रे तु पाठकानां मनोरञ्जनम् अहीयानं रक्षितुं लम्भकानाम् अन्योन्यसन्धिं च स्वाभाविकं विधातुं सोमदेवः स्वग्रन्थे विषयक्रमस्य परिवर्तनम् अकृत। यत्सत्यं सागरस्य कथाः रामणीयकेन गुणेन मञ्जर्याः कथाभ्यः अतिरिच्यन्ते। तासु हि सप्राणता-भव्यता विविधविधता चेति गुणत्रयं विद्यते। शैली च सागरस्य सरला, प्रसन्ना, स्वच्छा च। २१३८८ सङ्ख्याकानां पद्यानां मध्यात् केवलं ७६१ सङ्ख्याकानि पद्यानि अनुष्टुभितरच्छन्दोभिः निबद्धानि[2]। तेन अवहितेन दीर्घसमासानां क्लिष्टार्थपदवाक्यानाम् अलङ्काराणां च प्रयोगो वर्जितः। तस्य मुख्यम् उद्देश्यं सवेगं सरलकथाधारा प्रवहेद् ' इति आभाति। अत्र च तेन प्रशस्यं खलु साफल्यम् अधिगतम् ॥

अद्यापि कमनीयकान्तयः खलु एताः कथाः सन्ति। तासां बहुशः पञ्चतन्त्रस्य संस्करणविशेषाद् गृहीताः, क्षेमेन्द्रीयपञ्चमशतकस्य आरम्भकालिक्य[3] सन्ति। अत्र मनोरञ्जिनीभिः मूर्ख-धूर्त-प्रवञ्चकानां कथाभिः सह परकीयानां नायिकानाम् अभिसारादिकथाः अपि प्राप्यन्ते। न च ईदृश्यः एव सर्वाः कथाः। काश्चित् तु कथाः सत्यं आचारवर्जिन्यः। काचिद् हि धूर्ता तपस्विनी देवस्मितां धर्मव्याजेन उपदिशन्ती आह—

'भूतेन्द्रियानभिद्रोहो धर्मो हि परमो मत ' इति। न च सा उद्देश्यसिद्धिम् आप्नोति। देवस्मितायाम् अनुरक्तायामपि ये विटाः देवस्मितायाम् अनुरागिण आसन्, स्वबुद्धिकौशलेन तान् अनिवर्तमाना सा तान् विषमिश्रां सुरां पाययित्वा आयसेन शुनः पादेन तन्मस्तकानि मुद्रयित्वा कस्मिंश्चिद् अवकर (Filth)-खाते क्षिपति। ततः 'मम गृहात् पलायिता म भृत्यका इमे' इति घोषयित्वा सा तान् आमरणान्तं लज्जावनतमुखान् करोति। यत्सत्यं तेषां दुष्कृतस्य फलेन एतादृशेनैव भवितव्यम्। कतिचित् कथा इह बौद्धधर्मगन्धम् अपि उद्गिरन्ति। तथाहि 'मत्सौन्दर्येण आकृष्यमाणाः स्त्रियो मयि रज्यन्ति' इति विमृश्य कश्चिद् राजकुमारः स्वयं स्वचक्षुषी उत्पाटितवान्। कतिपयासु च कथासु अद्भुताः समुद्रयात्राः देशयात्राश्च वर्णिताः

---

१. तरंगनाम्ना एतद् उपभागविधानं सोमदेवस्य उपज्ञा। तदनन्तर कल्हणेन तत्पद्धतिः अनुसृता। बृहत्कथामञ्जरीगताः उपभागाः गुच्छाः इति अभिधीयन्ते ॥

२. वक्ष्यमाणं पद्यं तस्य शैल्या निदर्शनं भवति। परोपकार महत्त्वं वर्णयन् कविराह—

'परार्थफलजन्मानो न स्युर्मार्गद्रुमा इव।
तापच्छिदो महान्तश्चेज् जीर्णारण्यं जगद् भवेत्। इति ॥"

३. एता हि कथा आर्यसंघसेनस्य एकस्यां कृतौ प्राप्यन्ते। सा एषा कृतिः ४९२ तमे ख्रीष्टाब्दे तस्यैव शिष्येण गुणवृद्धिना चीनभाषायाम् अनूदिता आसीत् ॥

यत्र पोतभङ्गकर्पूरदेशादीनां नानावर्णनानि उपलभ्यन्ते। प्रकृतिवर्णनानि अपि च इह कविना नोपेक्षितानि ॥

## ५६ वेतालपञ्चविंशतिका

वेतालपञ्चविंशतिकायां नृपत्रिविक्रमसेनं प्रति वेतालेन (मृतशरीरवासिना पिशाचेन) वर्णिताः पञ्चविंशतिः कथाः सङ्गृहीताः (अनतिप्राचीनेषु तु पुस्तकेषु नृपत्रिविक्रमसेनस्य स्थाने नृपविक्रमादित्यस्य नामधेयं पठ्यते)। अपि नाम कदाचिद् एषा कस्यचिदपि ग्रन्थस्य अङ्गम् अभूत्वा विविक्तः ग्रन्थः आसीद् इति सम्भाव्यते; साम्प्रतं तु एषा बृहत्कथामञ्जरी–कथासरित्सागरान्तर्गता दृश्यते। अस्याः अनतिप्राचीनानि नानाशाखासंस्करणानि उपलभ्यन्ते। शिव[1]दासकर्तृकत्वेन प्रसिद्धा (द्वादशे ततोऽवरस्मिन् वा कस्मिंश्चित् शतके उदिता) एषा गद्यपद्योभयनिबद्धाऽस्ति। अपरं च एकं गद्यमयम् अज्ञातकर्तृकं संस्करणं क्षेमेन्द्रस्य बृहत्कथामञ्जरीगतां वेतालपञ्चविंशतिकां प्रायेण उपजीव्य सम्पादितं प्रतिभाति। जम्भलदास-वल्लभदासकृते च द्वे अपि संस्करणे न तथा प्राचीने। प्रायः सर्वासु अद्यतनीषु भारतीय भाषासु अस्याः अनुवादोऽस्ति जातः इत्यनेन अस्याः लोकप्रियत्वं स्पष्टम् ॥

विषयस्वरूपम् अस्याः सरलम्। तथाहि, केनचित् योगिना उपकृतः कश्चिद् नृपः तं प्रत्युपचिकीर्षति। योगी तं तरुविशेषशाखावलम्बिनं मृतशरीरम् आनेतुम् आदिशति। ओम् इत्युक्त्वा स नृपः यदा मृतशरीरस्य समीपम् आगच्छति तदा तच्छरीराविष्टः वेतालः "तूष्णीं चेत् त्वं स्थास्यसि तदा ऽहं त्वया उह्यमानः गमिष्यामि" इति ब्रवीति। तथेत्युक्त्वा नृपस्तं पृष्ठम् आरोप्य यावच्चलति तावत् पथि वेतालः एकां जटिलां कथां श्रावयित्वा नृपं तदुत्तरं पृच्छति। नृपे यथार्थम् उत्तरम् उक्तवति वेतालः तत्क्षणाद् उत्पत्य तमेव वृक्षं गच्छति यत्र असौ पूर्वं लम्बावलम्बः आसीत्। नृपः तं पुनः आनेतुं याति। वेतालः प्राक्तनं पणं पुनर्गृह्णाति, नृपश्च तं स्वीकृत्य वेतालं पृष्ठम् आरोप्य प्रतिष्ठते। मार्गे प्राग् जातं वृत्तं पुनर्जातम्। तदेवं, दुरुत्तराः विविधविधाः च पञ्चविंशतिः कथाः वेतालेन वर्णिताः। यथा, कस्यचिद् दानवस्य वशंगतां कन्यां एकां त्रयः प्रणयिनः मिलित्वा त्रायन्ते। तेषु हि एकः स्वबुद्धिवैभवेन तस्याः गोपनस्थानं विभावयति, अन्यः स्वमायाशक्त्या विमानम् प्रस्तुतीकरोति, अपरश्च स्वशौर्येण दानवं पराभवति। अथ 'कतमस्तावत् तां परिणयेद्' इति पृष्टः नृपः अविलम्बं 'वीर्यवान्' इति प्रतिब्रूते। ततः पञ्चविंशतितम्याः कथायाः प्रतिवचनावसरे नृपं तूष्णीकं विलोक्य वेतालः यथा स योगी नृपं हन्तुम् कपटोपायं

1. शालिवाहनकथा च कथार्णवश्च शिवदासस्यैव अन्ये द्वे कृती इति प्रसिद्धम्। अनयोः गद्यपद्यमय्याः अष्टादशसर्गात्मिकायाः प्रथमायाः मूले बृहत्कथामञ्जरी च कथासरित्सागरश्च। अपरस्यां तु मनोरंजनम् आचारनिशासनम् च उद्दिश्य रचितानां मूर्खधूर्तशठादीनां च पंचत्रिंशत् कथाः उपन्यस्ताः।

रचितवान् आसीत्तत् सर्वं नृपाय निवेद्य तद्रक्षोपायम् अपि अब्रवीत् ॥

शिवदासकृतायाः वेतालपञ्चविंशतिकायाः शैली सरला, उदारा, रम्या च; भाषाऽपि च सुगमा ललिता च । श्लेषस्य प्रमाणोऽपि विरलः । अधोऽवतारितं पद्यं तस्य अनुप्रासं निदर्शयति ।

स धूर्जटिजटाजूटो जायतां विजयाय वः । ५
यत्रैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥ इति ॥

## ५७ शुकसप्तति:

शुकसप्ततौ स्वकान्तौ स्वामिनीं शुकेन श्राविताः सप्ततीः कथाः सङ्गृहीताः सन्ति[1] । गन्धर्वावतारौ शुकसारिके स्वभार्यायाः रक्षितारौ नियुज्य मदनसेनो नाम कश्चिद् वणिक्पुत्रः देशान्तरं प्रस्थितः । अथ धर्मपथात् प्रभ्रश्यन्तीं तद्भार्यां काकः१० स्पष्टार्थैः शब्दैः उपदेशं ग्राहयितुम् अयतिष्ट । सा तु 'पुनश्चेदेवं प्रवक्तुं व्यवसितः प्राणै मोक्ष्यसे' इति मरणभयं प्रदर्श्य तं तूष्णीकं चकार । निपुणमतिः शुकस्तु आपाततः तस्याः वृत्तिम् अनुमोदमानः 'अमुकवत् त्वमपि किं मार्गस्य अस्य बाधापसारणोपायान् वेत्सि वा न वा' इति ताम् अप्राक्षीत् । 'न', इति तया प्रत्युक्ते स तां कथामेकां श्रावयितुं प्रास्तावीत् । 'वरम्' इति तया कथाश्रावणे१५ अङ्गीकृते शुकः रात्रौ कथां कथयितुम् आरभत । न च एतावता तस्याः मनोरथः सिध्यति । प्रथमस्याः हि कथायाः अवसाने एतादृशी प्रणयमार्गबाधा श्रूयते यस्याः निराकरणोपायं ज्ञातुं द्वितीयकथाश्रवणं खलु अपेक्ष्यते । तदेवं शुकः प्रतिनिशं पूर्वया सह निपुणम् अनुस्यूताम् अभिनवां कथां प्रकुरुते । इत्थं स्वामिन्याः कालं गमयता शुकेन यदा सप्ततितमी कथा समाप्तिं नीता तदा तत्स्वामी मदनसेनः गृहं प्रत्यागतः शुक-२० समीहितं च सिद्धम् । आसु कथासु प्रायेण असतीवधूनां छलव्यवहाराः एव निदर्शिताः॥

सर्वाङ्गदृष्ट्या मनोरञ्जकं खलु एतत् कथाकाव्यम् अस्ति । अन्तरा अन्तरा औपदेशिकैः वर्णनपरैश्च पद्यैः संयुक्तं गद्यम् अस्य सरलम् । अत्र उपलभ्यमानानि कानिचित् प्राकृतपद्यानि अवलम्ब्य केचित्तु प्रमाणान्तरेण विनाऽपि 'मूलग्रन्थेन प्राकृतभाषानिबद्धेन भवितव्यम्' इति ऊहं विदधते । ग्रन्थोऽयं शाखाद्वयेन प्रचरित२५ दृश्यते । एकस्याः शाखायाः ग्रन्थस्य प्रणेता चिन्तामणिः नाम कश्चिद् ब्राह्मणः अपरस्याश्च शाखायाः ग्रन्थस्य रचयिता अविदितनामादिकः श्वेताम्बरीयः कश्चिद् जैनः विश्रूयते । प्रीतिपात्रं खलु लोकस्य एषोऽस्ति, अद्यतनभाषासाहित्ये च अस्य प्रभावः सुलक्ष्यः । अविदितरचनाकालोऽयं ग्रन्थः यस्मिन् तस्मिन् वा रूपे वर्तमानः जैनहेमचन्द्रस्य (१०८८-११७२ ख्री०) विदितो बभूव इति सम्भाव्यते ॥ ३०

१. शुकस्य वक्तृत्वे विस्मयो न विधेयः, पुनर्जन्मसिद्धान्तेन पशुपक्षिणोऽपि मनुष्यवदेव वास्तविकाः भवन्ति । बाणस्य कादम्बरीकथाऽपि शुकेन वर्णिता इति च तावत् पाठकानां विदितमेव ॥

## ५८ सिंहासनद्वात्रिंशिका

सिंहासनद्वात्रिंशिकायां महाराजविक्रमादित्यस्य सिंहासने उत्कीर्णाभिः पुत्तलिकाभिः वर्णिताः द्वात्रिंशत् कथाः सङ्गृहीताः । एतत् तावद् अनुश्रूयते यद् इन्द्रेण विक्रमादित्याय दत्तं सिंहासनं तस्मिन् दिवं गते भूसाद् बभूव । अथ काले अतीते यदा एतद् धाराधराधरेण (११ शतकभवेन) महाराजभोजेन उपलब्धम् ५ आरुरुक्षितं च तदा तत्रत्याः पुत्तलिकाः तम् एताः कथाः श्रावयामासुः इति । अस्य खलु ग्रन्थस्य उपलभ्यमानैः नानारूपैः (एषु एकं वर्णनपरैः पद्यैः मिश्रितं गद्यमयम्, अपरम् औपदेशिकपद्यैः विमिश्रं पद्यमयम्, अन्यत् केवलपद्यनिबद्धं च दृश्यते) आधुनिकभाषासु विरचितैः अनुवादैश्च अस्य लोकप्रियत्वं स्पष्टम् । विक्रमादित्यवीर्यकर्मणां भूरिसंस्कृतग्रन्थकाराणां प्रियकाव्यविषयत्वाद् अस्य हि ग्रन्थस्य लोकप्रियत्वम् १० अत्तीयमाणं तावत् प्रवर्तते । भाषा अस्य सरला । ग्रन्थस्य प्रणयनकालप्रणेतृनाम्नोश्च मध्ये नैकतरस्यापि विषये न किञ्चिद् निश्चयेन विदितम् । 'वेतालपञ्चविंशतिकाप्रादुर्भावानन्तरम् अस्य प्रकाशोऽभूद्' इत्येव तावत् सकिञ्चिन्निश्चयं वक्तुं शक्यम् ॥

## ५६ बौद्धसाहित्यम्

यावदिदानीम् अस्माभिः लोकप्रियकथाविषयकाणां हिन्दुलेखकग्रन्थानाम् एव १५ परिचयः प्रदत्तः । अस्मिन्नग्रिमे च खण्डे एतं विषयम् अधिकृत्य उपलभ्यमानानां बौद्धजैनग्रन्थानां वर्णनं चिकीर्षामः । बौद्धधर्मप्रचारम् उद्दिश्यैव तन्मतावलम्बिभिः कृतिकारैः बौद्धकथाः विरचिताः । आसु मुख्यतः मनुष्यकर्मणां फलं खलु प्रतिपाद्यार्थीकृतं दृश्यते । बुद्धभक्तस्य मरणानन्तरं स्वर्गः अन्यथा नरकं गम्यते इत्येतत् प्रदर्शनम् एव आसां सारः प्रतिभाति । इह विषयेऽत्र अवदाननाम्ना प्रसिद्धान् केवलं प्राचीन- २० तमान् ग्रन्थान् परिचाययिष्यामः ॥

(क) अवदानशतकम्—अद्यावधि 'अवदान'- ग्रन्थेषु 'अवदानशतकम्' एव प्राचीनतमत्वेन खलु विदितम् । ख्रीष्टस्य तृतीयशताब्द्याः पूर्वार्द्धे एतत् चीनभाषायाम् अनूद्यते स्म । तस्मात् ख्रीष्टस्य प्रथमस्यां द्वितीयस्यां वा शताब्द्याम् अस्य प्रणयनम् अभूद्, न तु ततोऽधिकपूर्वम्, 'दीनार' शब्दस्य अत्र पठ्यमानत्वाद् २५ इति अनुमीयेत । अस्य प्रायेण उपजीव्यग्रन्थः सर्वास्तिवादिनां विनयपिटकं तावदस्ति । एतच्च दशाध्यायेषु मण्डलेषु विभज्यते । अत्र वर्णितानां कथानां शिक्षादायित्वेन एव अधिकं मूल्यम् अस्ति न तु साहित्यिकत्वेन । रचना अस्य गद्यमयी एव यत्र क्वचित् सरलकाव्यशैलीकानि पद्यान्यपि उपलभ्यन्ते । इह काश्चित् कथाः स्वरूपतः ऐतिहासिक्योऽपि सन्ति; तथाहि, अत्र बिम्बिसारनृपतेः पत्न्याः श्रीमत्या ३० कथा अधीयते, सा हि बुद्धास्थिगोपूजानिषेधकर्या अजातशत्रो आज्ञाया उल्लङ्घनात् तदादेशात् निहता स्वर्गं जगाम ॥

(ख) दिव्यावदानम् — नानास्थलेभ्यः विशेषतः सर्वास्तिवादिनां विनयपिटकाद्, विविधबौद्धकथाः सङ्गृह्य अस्य प्रणयनम् अभूत्। अस्य एकस्मिन् भागे महायानसम्प्रदायस्य अपरस्मिंश्च हीनयानसम्प्रदायस्य सिद्धान्ताः व्याकृताः। अस्य सम्पादयितुः अश्वघोष-प्रणीते बुद्धचरित-सौन्दरानन्दे अधीते अभूताम्। नहि अत्र विशेषः साहित्यिकप्रकर्षः दृश्यते। अश्वघोषेण 'अतीत्य मर्त्यान् अनुपेत्य देवान्' इति (सौन्द., चतुर्थ सर्गे) रमणीयतया योऽर्थः निबद्धः स एव 'शुभ्र'-तनुजनुषः वपुर्गुणं वर्णयता अनेन 'अतिक्रान्तो मानुषवर्णम् असम्प्राप्तश्च दिव्यवर्णम्' इत्येवं दुर्बलैः पदैः प्रतिपाद्यते॥

दिव्यावदाने नैका काचित् शैली अनुसृता दृश्यते। क्वचिद्धि अत्र वर्णनपरैः पद्यैः मिश्रितं सरलं क्वचिच्च तत्र तत्र काव्यानुकारैः पद्यैः समलंकृतं क्लिष्टं गद्यम् उपलभ्यते। अपि नाम अस्य बहुग्रन्थाश्रितत्वादेव एवं स्यात्॥

ख्रीष्टस्य द्वितीयशतके इदं सङ्गृहीतम् अभूद् इति सम्भाव्यतेतमाम्। कालक्रमे वर्णितपूर्वाद् अवदानशतकात् पूर्वम् अस्य स्थानं दातुं तावद् न शक्यम्। २६५ तमे ख्रीष्टवर्षे अस्य शार्दूल-कर्णावदानाख्यायाः कथायाः अनुवादः चीनभाषायां सञ्जातः, तस्मात् ततः पूर्वं खलु अस्य प्रणयनं समाप्तम् इति पर्यवसीयते। अस्य कथाः मनोरमाः नानारसास्वादजनकाश्च खलु। अशोकपुत्रस्य कुणालस्य कथा तु वस्तुतः करुणा। कुणालस्य हि विमाता तस्य पितुः अशोकस्य हृदयं तस्माद् विभेद्य तथा क्रूरकर्मण्यस्य हृदयं कृतवती यथा कुणालस्य अक्ष्णोः निष्कासनं किल अभवत्॥

(ग) आर्यशूरविरचिता जातकमाला — बोधिसत्त्वानाम्[1] उदात्तकर्मणां कथाः येषु ग्रन्थेषु सङ्गृहीताः ते मिलित्वा जातकमालानाम्ना प्रसिद्धाः। अस्यां हि यो भावो भगवान् बुद्धः स्वानेकमानुषभवसञ्चरितशतेन प्रसिद्धः तस्य पूर्वजन्मकृतानि उदारचरितानि वर्णितानि। प्रतिपाद्यार्थान् अधिकृत्य अस्याः आधारः मुख्यतया पालिजातकग्रन्थः पालिभाषानिबद्धं चर्यापिटकं च वर्तते। शैली च अस्याः अश्वघोषीयमहाकाव्यशैलीम् अनुकरोति। बोधिसत्त्वावदानमालेव एषा जातकमाला इत्यपि केचिद्[2] मन्यन्ते। आसु जातककथासु कश्चित् प्राचीनः इतिहासः नोपलभ्यते। एताः कथाः स्वरूपेण चीनभाषानिबद्धानि स्वकाव्यान्तराणि बहुशः अनुकुर्वन्ति, 'बौद्धसम्प्रदायस्य प्रायेण सर्वाभिमतसिद्धान्तानां प्रचारार्थम् सङ्गृहीताः एताः कथाः उपदेशात्मकाः एव' इति तद्विदो विदन्ति। ग्रन्थकर्त्रा तु स्वयं पाठकजनानां सद्धर्मे भक्त्यतिरेकजननं खलु अस्याः उद्देश्यम् उक्तम्॥

कथानाम् अमूषां भाषा अंशतः अलंकृतगद्यमयी अंशतश्च काव्यानुकारिवर्णनात्मपद्यमयी। प्रतिकथं प्रारम्भः गद्यमयः सम्प्रधारितश्च तत्तद्विशिष्टशालोप-

१. परमबुद्धत्वप्राप्तेः प्राग् ये बौद्धमहात्मानः केवलं दयाविशेषेणैव जन्मानि धारयन्ति पूर्णतां प्राप्तिमार्गयात्रिण एव भवन्ति ते बोधिसत्त्वाः इति संज्ञां लभन्ते॥

२. एच्. प्रथम. राजेन्द्रलालमित्रमहोदय.॥

न्यासः अवश्यम् उपलभ्यते । दानधर्ममहत्त्वं निदर्शयितुं शिबिराजकुले अवतीर्णस्य बोधिसत्त्वस्य कथा आख्यायते । तस्य दानेन आढ्याः भूत्वा भिक्षुकाः भिक्षणम् अत्यजन् । कश्चिद् अन्धो ब्राह्मणः तम् एकम् अक्षि अयाचत, स च तस्मै द्वेऽपि अक्षिणी अददात् । (ब्राह्मणश्च एव अस्य वदान्यतां परीक्षितुं परिवर्तितरूपेण आगतः इन्द्रः खलु आसीत्) । अक्षियाचकाय ब्राह्मणाय अक्षि अनदाय वस्त्वन्तरं प्रदातुं ५ प्रार्थयद्भ्यः स्वसचिवेभ्यः एष प्रत्यब्रवीत्—

"यदेव याच्येत तदेव दद्यान्नानीप्सितं प्रीणयतीह दत्तम् ।
किमुह्यमानस्य जलेन तोयैः दास्याम्यतः प्रार्थितमर्थमस्मै ।"

अथ पुनरपि सचिवैः तथाविधदानाद् विरन्तुं प्रार्थ्यमानः अयं प्रत्यभाषत—

"नायं यत्नः सार्वभौमत्वमाप्तुं नैव स्वर्गं नापवर्गं न कीर्तिम् ।　　१०
त्रातुं लोकानित्ययं त्वादरो मे याच्ञाक्लेशो मा च भूदस्य मोघः" इति ।

अत्र प्रायेण त्याग-त्यागहेत्वोः परस्परं कश्चिद् अनुरूपः परिमाणसम्बन्धः नोपलक्ष्यते । तथाहि एकस्याम् अन्यस्यां कथायां बोधिसत्त्वः क्षुधार्तायै सिंह्यै आत्मनः शरीरमपि अर्पयति ॥

आर्यशूरः महान् पण्डितः महांश्च प्रतिभाशाली लेखकः बभूव । अस्य भाषा १५ निर्मला वचोभङ्गिश्च शुद्धा । अस्य शैली खीष्टस्य द्वितीयतृतीयशताब्द्योः उत्कीर्णानां शिलालेखानां शैल्या साम्यम् उपैति । एष छन्दःप्रयोगेऽपि कृतहस्तः भाति, छन्दांसि च एतत्प्रयुक्तानि रसानुकूलानि । एषु छन्दस्सु कतिपयानाम् प्रायः अप्रयुक्तत्वात् तैः काव्यलक्ष्मीः अधिकतरं मनोज्ञा भाति । अस्य पद्येषु विविधाः काव्यालङ्कृतयोऽपि सुप्रयुक्ताः दृश्यन्ते । तथा हि, अधोऽवतारिते पद्यखण्डे सरलोऽतिरम- २० णीयश्च अनुप्रासो विलोक्यते—

"ततश्चकम्पे सधराधरा धरा
व्यतीत्य वेलां प्रससार सागरः" (शिबिजातके ३८)

गद्ये च अस्य प्रायः दीर्घसमासप्रयोगे सत्यपि क्वाचित्कम् अर्थगाम्भीर्यं दृश्यते । निम्नोद्धृतेन गद्यखण्डेन अस्य विच्छित्तिविच्छुरितं गद्यं निदर्शयिष्यते—२५

"अथ बोधिसत्त्वो विस्मयपूर्णमनोभिः मन्दनिमेषप्रविकसितनयनैः सादरैरनुयातः पौरैरभिवीक्ष्यमाणो जयाशीर्वचनपुरःसरैश्च ब्राह्मणैरभिनन्द्यमानः पुरवरमुच्छ्रितध्वजविचित्रपताकशोभितमभ्युदयशोभमभिगम्य पर्षदि निषण्णः सभाजनार्थमभिगतममात्यप्रमुखस्य ब्राह्मणवृद्धपौरजानपदस्यैवमात्मोपनायिकं धर्मं देशयामास ॥"　　३०

आर्यशूरस्य ग्रन्थस्य पालिजातकोपजीवित्वाद् तत्कालेन बौद्धसम्प्रदायग्रन्थेषु अस्य क्वचित् तत्र-तत्र पालिशब्दाः अपि यदि उपलभ्येरन् तदा किमु आश्चर्यम् ॥

कालः— अश्वघोष एव आर्यशूरः इति यत् तारानाथमहोदयः उदटङ्कयत् तत्र पर्याप्तं प्रमाणं नोपलभ्यते। एष च महोदयः अश्वघोषस्य नामान्तराणि यत् प्रादर्शयत् न तावतापि कश्चिद् विशिष्टनिर्णयः ईषत्करः। अश्वघोषीयमहाकाव्यानाम् आर्यशूरीयजातकमालायाश्च शैल्योः यो महान् अन्योन्यभेदः प्रत्यक्षः, तद्बले विश्वसतां तारानाथीया एषा उट्टङ्कना असारा भाति ॥ ५

१००० तमे ख्रीष्टाब्दे अस्याः चीनभाषानुवादो जातः। त्रिविष्टपीयजनश्रुतिषु अपि कथासङ्ग्रहलेखकत्वेन प्रसिद्धशिक्षकत्वेन च किल आर्यशूरनामधेयं श्रूयते। ख्रीष्टसप्तमशतके भारतम् अधिवसतः चीनयात्रिणः इत्सिङ्गस्य जातकमाला विदिता आसीत्। आर्यशूरकृतित्वेन प्रसिद्धस्य कस्यचित् कर्मफलविषयकस्य सूत्रग्रन्थस्य ४३४ तमे ख्रीष्टाब्दे चीनभाषानुवादः समपद्यत। तस्मात् 'ख्रीष्टस्य चतुर्थे तृतीये वा१० शतके एष ग्रन्थकारो बभूव' इति वचनं नानुचितं स्यात् ॥

## ६० जनसाहित्यम्

बौद्धकथाः इव जैनकथाः अपि उपदेशोद्देश्यम् आदाय रचिताः दृश्यन्ते। तासां प्रयोजनं न खलु पाठकमनोरञ्जनं प्रत्युत जैनधर्मसिद्धान्तप्रदर्शनं खलु अस्ति ॥

(क) सिद्धर्षेः उपमितिभवप्रपञ्चकथा—उपमितिभवप्रपञ्चकथायां लोककथारूपेण१५ रूपकालङ्कारबलेन च मनुष्यजीवनं व्याक्रियते। संस्कृतसाहित्ये इत्थंभूतग्रन्थानाम् आद्यत्वाद् हि ग्रन्थोऽयं महत्त्वास्पदं खलु भवति[1]। एष च ९०६ तमे ख्रीष्टाब्दे सिद्धर्षिणा प्राणायि। भूमिकावसाने कर्त्रा स्वयं व्याख्यातत्वाद् अत्रत्यं रूपकं न दुरधिगमम्। रचना अस्य गद्यमयी यत्र क्वचित् क्वचित् पद्योपलम्भोऽपि भवति। भाषा च तथा सरला यथा बालकाः अपि तदर्थं सुखेन अवबोद्धुं शक्नुवन्ति। वस्तुतः बालबोधोद्देश्यं२० मनसि निधाय एव कर्त्रा ग्रन्थोऽयं यथासम्भवं सरलभाषया उपनिबद्धः। अस्य शैल्यां प्रसादिन्यां सत्याम् अपि ग्रन्थस्य रूपकमयत्वाद् औपदेशिकत्वाच्च न अनेन पाठकानां यथेष्टं मनोरञ्जनं जायते ॥

(ख) हेमचन्द्र (१०८८-११७२) कृतं परिशिष्टपर्व — हेमचन्द्रीये परिशिष्टपर्वणि पुरातनानां जैनमहात्मनां कथाः वर्ण्यन्ते, ताश्च सरलाः लोकप्रियाश्च सन्ति।२५ एतत् प्रणेतुः हृदयं जैनधर्मप्रचारविचारेण तथा उपद्रुतम् आसीद् यथा इतिहासप्रतीतः महाराजचन्द्रगुप्तोऽपि अस्य मतेन जैनधर्मम् अङ्गीकृत्य तत्सद्भक्तः इव शरीरं तत्याज। अहो यत् यद् विंसेंटस्मिथमहोदय कथायाम् अस्यां श्रुतप्रत्ययोऽभूत्! ग्रन्थोऽयं प्रणेतुः त्रिषष्टिशलाकापुरुषचरितमित्याख्यायाः रचनायाः परिशेषः खलु ॥

---

१. द्वितीयश्च इत्थंभूतो ग्रन्थः प्रबोधचन्द्रोदयो नाम अस्माद् अर्वाचीनः ॥

# अथ दशमोऽध्यायः

## शिक्षोद्देश्यकाः पशुपक्षिकथाः

### ६१ शिक्षोद्देश्यकपशुपक्षिकथालक्षणम्

एकतो बृहत्कथया अन्यतः पञ्चतन्त्रेण च ये द्वे साहित्यधारे प्रतिनिधीयेते भारतीयसाहित्यशास्त्रिणः स्वरूपतस्ते मिथो भिन्ने न प्रदर्शयन्ति, अथापि तद्गतसा- ५ म्यवैषम्यपरीक्षणेन अमुयोः अन्योन्यस्वरूपभेदः स्फुटं गृह्यते। ते हि अन्तरात्मनि, बाह्याकारे प्रतिपाद्यार्थे च परस्परं भिद्येते। प्रथमस्यां कर्तुः उद्देश्यं पाठकमनोरञ्जनम् अपरस्यां च सदाचारराजधर्मयोः शिक्षा दृश्यते। प्रथमस्याः रचना सरलगद्यमयी वा कथाप्रयुक्तपद्यमयी वा उभयमयी वा भवति, अपरस्यास्तु औपदेशिकपद्यैः अन्तरा अन्तरा विच्छिद्यमानेन गद्येन एव धृतशरीरा भवति कथाशीर्षकाणि च अपि यस्यां१० पद्यबद्धानि एव भान्ति। बृहत्कथया प्रतिनिधीयमाने हि कथासाहित्ये अन्धविश्वासाः, लोकप्रचरितानि पौराणिकोपाख्यानानि, रागपराक्रमयोः स्वप्नप्रतिस्वप्नयोश्च आख्यानानि निबध्यन्ते, पञ्चतन्त्रप्रतिनिधिके कथासाहित्ये तु पशुपक्षिकथाच्छलेन मानवहृदयस्य अनुभूतयः संवेदनाश्च राजनीतिः धर्मनीतिश्च निपुणतरं व्याक्रियन्ते। तस्माद् बृहत्कथादि-ग्रन्थसाहित्यं 'लोकप्रियकथाः' इतिनाम्ना, पञ्चतन्त्रप्रमुखग्रन्थसाहित्यं१५ च 'शिक्षोद्देश्यकपशुपक्षिकथाः' इतिनाम्ना व्यवह्रियते॥

### ६२ पशुपक्षिकथासाहित्यस्य उद्भवः

वैदिकसाहित्ये विशिष्य च ऋग्वेदे नीतिकथासाहित्यप्राप्तये प्रयत्नो निरर्थकः। पञ्चतन्त्रस्य मुख्यलक्षणं तस्य पशुपक्षिकथामयत्वे नीतिशिक्षकत्वम् इति तावत् प्राग् उक्तम्। ऋग्वेदे (८, १०३) केवलं एकस्मिन् हि सूक्ते यत्र मन्त्रान् पठन्तः ब्राह्मणाः वर्षा-२० गमे मण्डूकैः भेकैः सह उपमीयमानाः इव प्रतिभान्ति। अथ ऋग्वेदानन्तरम् एतादृशानि कतिचित्कानि वर्णनानि छान्दोग्योपनिषदि आम्नायन्ते। तत्र हि बालः सत्यकामः प्रथमं (तुर्याध्याये पञ्चमे खण्डे) ऋषभस्य सकाशाद् ब्रह्मज्ञानं प्राप्नोति, ततः (तुर्याध्याये सप्तमे खण्डे) हंसस्य सकाशात्, तदनु च (तुर्याध्याये अष्टमे खण्डे) मद्गोः सकाशात्। महाभारते पशुपक्षिकथानां प्रारम्भिकं स्वरूपम् उपलभ्यते। तथाहि तत्र२५ मार्जारस्य कथा पठ्यते यः व्रतं वेषच्छलेन मूषिकेषु विश्वासम् उत्पाद्य सर्वान् तान् अभक्षयत्। मा नाम त्वं सुवर्णाण्डप्रदायिन्या चटकया हीनः स्याः इति धृतराष्ट्रं प्रबोधयन् विदुरः स्वं युधिष्ठिरादीनां पीडनाद् विरन्तुम् आवेदयामास। तत्रैव स्थलान्तरे चतुरशृगालस्य कथा अनु श्रूयते यो वै व्याघ्रादीनां सुहृदां साहाय्येन महतीं मृगसंपदं मुक्त्वा आगात् कुटिलमतिप्रज्ञान् तान् सर्वान् तस्याः अंशभागिभ्यो३०

प्रतारयामास । एतां हि चतुरशृगालकथां श्रावयित्वा श्रावयित्रा 'एवं खलु पाण्डवाः अतिसन्धातव्याः' इति शिक्षा निष्कृष्यते ॥

बौद्धधर्मप्रचारः अस्य साहित्यस्य उत्कर्षे समजायत । वैदिकधर्मे इव बौद्धधर्मे हि 'पुण्यापुण्य-चरितैः मनुष्यदेहस्थेन जीवेन एतद्देहपातानन्तरं पश्वादि-योनिः प्राप्यते' इति सिद्धान्ते लोकस्य दृढा आस्था समुत्पाद्यमाना दृश्यते । बौद्धैः जैनैश्च ५ स्वसिद्धान्तप्रचारार्थं कथासाहित्याश्रयो गृहीतः इति तावत् पूर्वम् आवेदितम् एव । तथा च बौद्धजातकग्रन्थेषु बुद्धस्य इतरेषां च महापुरुषाणां प्राग्भवीयानि चरितानि व्यञ्जयन्त्यः पश्वादिकथाः निबद्धाः उपलभ्यन्ते । भरहुतनामके स्थाने उपलभ्यमानेन बौद्धजातकानां स्मारक (Monumental) साक्ष्येण च 'ख्रीष्टपूर्वे द्वितीये शतके एतादृश्यः पश्वादिकथाः नितरां लोकप्रियाः अभूवन्' इति निःसंशयं सिध्यति । पातञ्जले महा-१० भाष्ये लोकोक्तीः विषयीकृत्य उपन्यस्तैः कतिपयैः उद्देशैः (उल्लेखैः) च इदं मतं पुष्टिम् एति ॥

अथ कथासाहित्यस्य लक्षणघटकं द्वितीयम् अवयवं नीतिशिक्षणम् अधिकृत्य तु तावद् एतद् वक्तव्यं यद् विषयेऽत्र पञ्चतन्त्रप्रणेत्रा नीतिशास्त्राद् अर्थशास्त्राच्च पर्याप्ता सामग्री सङ्गृहीता इति । कस्यचिद् राज्ञो मूर्खान् पुत्रान् सुखेन नीति-१५ शास्त्रे—राजधर्मे, लोकव्यवहारे, आचारविद्यायां च—प्रवीणान् कर्तुम् एव पञ्चतन्त्रस्य प्रणयनम् अभूद् इति तावत् कर्त्रा स्वयं स्वीकृतम् । चाणक्यकृतम् अर्थशास्त्रं विविधानि राजनीतिसन्दर्भान्तराणि च पञ्चतन्त्र-कर्ता विलोकितवान् इति निश्चितं भाति । नीतिशास्त्रस्य सिद्धान्तानां पशुकथाभिः सह महता चातुर्येण मिश्रणात् किल तद् औपदेशिकपशुपक्षिकथासाहित्यम् उद्भूतम्, यस्य रूपविशेषः निखिलसंस्कृत-२० वाङ्मये स्वसदृशान्तरसम्बन्धशून्ये पञ्चतन्त्रे विलोक्यते । पञ्चतन्त्रस्य सजातीयान्तरं तु न वै लभ्यते ॥

## ६३ आद्यं पञ्चतन्त्रम्

(१) आद्यग्रन्थस्य नामधेयम् ।

दक्षिणापथीये नेपालीये च ग्रन्थे, वस्तुतः येषु येषु अपि ग्रन्थेषु नाम-२५

---

१. पठ्यते हि हितोपदेशे (पंचतन्त्रस्य प्रायः रूपान्तरविशेषे)—

'कथाच्छलेन बालानां नीतिस्तदिह कथ्यते' इति ॥

पंचतन्त्रं च स्वयं तद्भूमिकायां 'नीतिशास्त्रम्' इत्याख्यातम्, सकलार्थशास्त्रसारानुशीलनं विधायैव प्रणीतम् इति च उदितम् ॥

२. तथाहि—

'मनवे वाचस्पतये शुक्राय पराशराय ससुताय ।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ॥'

भूमिकायां पंचतन्त्रकर्त्रा प्रसङ्गवशादस्मादेव नाना नीतिशास्त्रप्रणेतारः स्मृताः ॥

धेयोल्लेखः लभ्यते तत्र सर्वत्र पञ्चतन्त्रम् इत्येव नामधेयम् अवाप्यते। हितोपदेशे ऽपि च 'पञ्चतन्त्रात् तथाऽन्यस्माद् ग्रन्थादाकृष्य लिख्यते' (भूमिकायां पद्यं ६) इत्याद्युल्लेखेषु पञ्चतन्त्रम् इत्येव नामधेयं दृश्यते। पञ्चतन्त्रभूमिकायाम् अपि 'एतत् पञ्चतन्त्रकं नाम नीतिशास्त्रं बालबोधनार्थं भूतले प्रवृत्तम्' इत्येवं पञ्चतन्त्रम् इति नामधेयं पठ्यते। तस्माद् आद्यस्य ग्रन्थस्य नामधेयं पञ्चतन्त्रं खलु अभूद् इति ५ सम्प्रधार्यते। तन्त्रपदेन हि अत्र अध्यायः परिच्छेदो वा ग्रन्थस्य अभिप्रेतः। 'तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम्' इत्येवंविधेन ग्रन्थस्य प्रमाणेन अपि तावद् मतमिदं समर्थ्यते। अष्टाध्यायीप्रभृतिषु नामधेयेषु सादृश्यमपि अस्य नामधेयस्य प्राप्यते। अपि नाम तन्त्रशब्दः राजधर्मं लोकव्यवहारज्ञानं च अधिकुर्वतः अध्यायस्य वाचकः स्यात्। तन्त्रं नाम छलं (Trick) इति यद् हर्टेल-(Hertel) महाशयेन १० ऊहितं तदसत्॥

(२) ग्रन्थस्य लोकप्रियत्वम्।

पञ्चतन्त्रस्य महती लोकप्रीतिभाजनता अनेन एव स्फुटा यद् अस्य अति पञ्चाशद्भाषासु अति द्विशतविविधसंस्करणानि लभ्यन्ते। पञ्चतन्त्रशाखिनः एतावतः शाखाविस्तारस्य प्रायः त्रयः चतुर्थांशाः भारताद् बहिः प्रसृताः। ११०० तमे १५ खीष्टाब्दे हिब्रभाषायाम् अस्य भाषान्तररूपम् अजनि, आ १५७० तमात् खीष्टाब्दाच्च ग्रीक-स्पेनिश-लैटिनेटैलियन-जर्मन-पुरातनस्लैवोनिक चैकाङ्गलभाषासु इदम् अनूदितं जातम्। अद्यत्वे आयवद्वीपात् (from Java) आइसलैंड पर्यन्तं खलु अस्य प्रचारः प्राप्यते॥

भारते तु चिराद् अधिकतरम् अस्य लोकप्रियत्वं प्रवर्तमानं प्राप्यते। एतद्धि २० अपभ्रंशादिषु प्राचीनासु हिन्दीप्रभृतिषु अद्यतनीषु च भाषासु अनूदितं भूत्वा भूयः संस्कृतभाषायाम् अनूदितं दृश्यते[1]। अस्य पद्यबद्धं रूपं भूत्वा पुनः गद्यबद्धं रूपं जातम्। एतत् संकोचं विकासं च आप्नवत्। अस्य बह्व्यः कथाः सर्वसाधारणजन कथा रूपेण प्रचरिताः भूत्वा पुनः अद्यतनमौलिककथारूपेण संगृहीताः सन्ति। एवं गते 'भूतले न धर्मग्रन्थान् विहाय लौकिकेन ग्रन्थान्तरेण एतावान् लोकसमादरः २५ अधिगतः' इति वचनं कः प्रत्यवतिष्ठेत॥

(३) पंचतन्त्रस्य नानाशाखाः—अहो वत आद्यं पञ्चतन्त्रं कथासु केवलम् अवशिष्टम्। कीदृशं तु आद्यस्य पञ्चतन्त्रस्य स्वरूपम् आसीद् इति तु अस्य नानाशाखीयैः उपलभ्यमानैः रूपैः अंशतोऽनुमातुं सुशकम्। तेषां हि परस्परतुलया ज्ञायते यत्— ३०

(क) तेषां सर्वेषां योनिः समाना एव (अन्यथा तेषां गद्यखण्डेषु पद्येषु च

---

१. पञ्चविंशतिका शुकसप्ततिः सिंहासनद्वात्रिंशतिका लोकप्रचरितकथाविषयकानि पुस्तकान्तराणि अपि च पंचतन्त्रमूलकानि सन्ति। अनुवादश्च पंचतन्त्रस्य व्रजभाषा-हिन्दी पुरातनाद्यतनोभयविधगुजराती-पुरातनाद्यतनोभयमहाराष्ट्री-तामिलप्रभृतिषु भाषासु प्राप्यते॥

प्राप्यमाणम् आधिक्यम् ऐकरूप्यं कथं नु समाधेयं स्यात्)

(ख) अपि च, एषु रूपेषु ये दोषाः दृश्यन्ते न ते अनुस्त्रियमाणाः सन्तः आद्य-ग्रन्थं प्रत्युपयन्ति । इति ॥

अथ वक्ष्यमाणाः ग्रन्थाः आद्यस्य पञ्चतन्त्रस्वरूपस्य विज्ञाने उपकुर्वन्ति—

(१) क—तन्त्राख्यायिका । ५

ख—११०० तम खीष्टाब्दासन्नकाले केनचिद् जैनेन रचितः 'सरलग्रन्थ' इति संज्ञितः (Textus Simplicior) पञ्चतन्त्रग्रन्थः ।

ग—उत ११९९ तमे खीष्टाब्दे पूर्णभद्रप्रणीतः पंचतन्त्रग्रन्थः ।

(२) क— दक्षिणापथीयं पंचतन्त्रम् ।

ख— नेपालीयं पंचतन्त्रम् । १०

ग— हितोपदेशः ।

(३) क्षेमेन्द्रेण सोमदेवेन च प्रस्तुतं बृहत्कथागतं पंचतन्त्रवर्णनम् ।

(४) पह्लवीभाषानिबद्धं पंचतन्त्रम् । सर्वपाश्चात्त्येषु देशेषु प्रचरितं पंचतन्त्रम् एतत् पंचतन्त्रोपजीव्यकं खलु ॥

ऐजर्टन (Edgerton) महाशयेन पञ्चतन्त्र साहित्यस्य अनुशीलने महान् १५ आयासः खलु अर्जितः । तन्मतेन पंचतन्त्रस्य पूर्वोक्ताः इमाः चतस्रः स्वतन्त्रशाखाः सन्ति । हर्टल (Hertel) मतेन तु केवलं द्वे एव । एतयोः मतयोः अन्योन्यभेदं प्रदर्शयितुम् अधस्तात् सारणी एका उपन्यस्यते—

हर्टलमतेन पंचतन्त्रस्य शाखाविभागः




[1] [illegible]

ऐजर्टनमतेन पंचतन्त्रस्य शाखाविभागः

आद्यं पंचतन्त्रम्[1]

उत्तरपश्चिमीया बृहत्कथा[1]
'आद्या तन्त्राख्यायिका'[1]
आद्यं दक्षिणापथीयं पंचतन्त्रम्
आद्यं पह्लवीपंचतन्त्रम्[1]

क्षेमेन्द्रग्रन्थीयं पंचतंत्रम्
सोमदेवग्रंथीयं पंचतंत्रम्
आद्यं नेपालीयं पंचतंत्रम्[1]
पह्लवीपंचतन्त्रम्[1]

तंत्राख्यायिका
'आद्यः सरलग्रंथः'[1]
दक्षिणापथीयं पंचतंत्रम्[1]

नेपालीयं पंचतंत्रम्
हितोपदेशः
पुरातनसीरिया-देशभाषा निबद्धं पंचतन्त्रम्
अरबभाषा-निबद्धं पंचतन्त्रम्

'सरलग्रन्थः'

पूर्णभद्रीयं पचतन्त्रम्

[1]एतच्चिन्हं ग्रन्थस्य काल्पनिकत्वं द्योतयति ॥

यतः आद्यपंचतन्त्रस्वरूपस्य ज्ञानम् एतन्मतद्वयभेदाश्रितं तस्मात् तदेतन्मतद्वयभेदाः विशेषेण अवधेयतां गच्छन्ति । तथाहि,

(अ) हर्टलमते सर्वेषाम् उपलब्धानां पंचतन्त्रस्य नानारूपाणां विकृतिमापन्नं मूलं समानं, तच्च तेन 'तं' इति संज्ञया व्यवह्रियते । ऐजर्टनमते तु कल्पनामात्रं खल्वेतत् ॥ ५

(आ) हर्टलमते आद्यमूलाद् अनन्तरं मध्यमूलम् अपि एकम् आसीद् यस्मात्, तन्त्राख्यायिकां केवलां वर्जयित्वा, सर्वाणि शाखान्तराणि प्ररूढानि । एतद् मध्यमूलं तेन 'क' संज्ञा व्यवहृतम् । ऐजर्टनस्य (मते) तु आद्यमूलवद् एतद् मध्यमूलम् अपि यतः मानसिकम् अबीजसर्गमात्रम् । हर्टलमते तत् तदेव गद्यखण्डं पद्यं वा मौलिकं भवितुमर्हति यद् यत् तन्त्राख्यायिकायां वा 'क' शाखायाः प्ररोहेषु१० एकस्मिन् अपि वा उपलभ्यमानं स्यात् । ऐजर्टनमते तु स्वतन्त्रयोः उभयोः शाखयोः एकस्मिन् अपि संस्करणे यद् यत् पद्यं गद्यखण्डं वा लभ्यते तत् तद् मौलिकम् एव खलु, तन्त्राख्यायिकायां तस्य उपलम्भानुपलम्भौ अप्रयोजकौ ॥

(इ) हर्टलस्य मते दक्षिणापथीयस्य पह्लवीभाषामयस्य सरलग्रन्थ संक्षितस्य च पञ्चतन्त्रस्य मूलभूतम् उत्तरपश्चिमीयं यत् पंचतन्त्रम् ऐजर्टनस्य मते तत्सद्भावे१५ प्रमाणं नास्ति ॥

हर्टलेन उत्तरपश्चिमीयसंज्ञकाद् एकस्माद् मूलाद् दक्षिणापथीय–पह्लवी–सरलग्रन्थेतिशाखात्रयविभक्तस्य पंचतन्त्रस्य या उत्पत्तिः कल्पिता न केवलं सैव तेषां परस्परसादृश्यवैसादृश्यानुशीलनाद् मिथ्या भाति, अपितु परस्परनिरपेक्षितायाः पंचतन्त्रसम्प्रदायस्य रूढित्रय्याः इयं शाखात्रयी प्रादुर्भूता इत्यपि च सिध्यति । यथा२० हर्टलः प्रतिपादयति यदि तथा एकमूलोद्गताः दक्षिणापथीयपह्लवी-सरलग्रन्थेतिनाम्न्यः तिस्रः शाखाः, तर्हि 'सरलग्रन्थ'-तन्त्राख्यायिकयो मध्ये वा 'सरलग्रन्थ' पूर्णभद्रीयग्रन्थयोः मध्ये वा तथा सादृश्येन न भवितव्यं यथा पह्लवी-'सरलग्रन्थयोः मध्ये; अवस्था तु विपरीता खलु दृश्यते । पुनश्च हर्टल सिद्धान्तेन हितोपदेश-पूर्णभद्रीयग्रन्थयोः मध्ये यथा साम्येन अवश्यं भवितव्यं न तथा हितोपदेश-दक्षिणापथीय-२५ पंचतंत्रयोः मध्ये; न चैवं दृश्यते तस्माद् अप्रामाणिकयः खलु हर्टलवाचोयुक्तय इति फलितं भवति ॥

(४) प्रणेता—विष्णुशर्मा नाम कश्चित् पण्डितः महिलारोप्याधिपतेः नृपामरशक्तेः त्रीन् पुत्रान् षड्भिः मासैः राजनीति शिक्षयितुं स्योदृतवान् इति तावत् पंचतन्त्रभूमिकातो ज्ञायते । अथ विष्णुशर्मा एव खलु अस्य सन्दर्भस्य प्रणेता इति च३० पंचतन्त्रभूमिकास्थे तृतीये पद्ये स्पष्टम् अभिहितम् । कल्पिता विष्णुशर्मेति संज्ञा इति तु साहसमात्रम् एव । यत संस्तरस्तु विष्णुशर्मणोऽस्य न कोऽपि बाध्यते । भूमिकायां तेन नानादेवानां स्तवनाद् उदारमना ब्राह्मणः खलु स बभूव न तु जैनो

वा बौद्धो वा इत्येतावदेव केवलम् अनुमातुं शक्यम्[1] ॥

(५) उद्भवस्थानम्—आद्यपञ्चतन्त्रजन्मभूविषये न तावत् किमपि तात्त्विकं विदितम्। मौलिके सन्दर्भे हस्तिसिंहयोः नामधेयस्य अनुपलम्भाद् उष्ट्रस्य च आभीक्ष्ण्येन वर्णनात् कश्मीरदेशः खलु आद्यस्य पञ्चतन्त्रस्य जन्मभूः इति यद् हर्टलमहाशयेन तर्कितं न तद् वस्तुतः तर्कसहम्। कासांचिद् यात्राणां यानि नामधेयानि अत्र उपलभ्यन्ते, सर्वत्र भारते वर्षे तत्प्रसिद्धेः न तान्यपि कंचन पक्षं सुप्रतिष्ठापयितुं ५ क्षमाणि। महिलारोप्यनाथः अमरशक्तिर्नाम नृपः न कर्तृकल्पनामात्रं चेत् तर्हि दाक्षिणात्यः नूनं पञ्चतन्त्रकर्ता इति आस्थीयेत। पञ्चतन्त्रे वर्ण्यमानः ऋष्यमूको नाम पर्वतः दक्षिणापथे स्थितः इत्येतेन अपि मतमिदं सम्यक् समर्थितं भवति॥

(६) रचनाकालः—दीनारो नाम रोमनमुद्राविशेषः (Denarius) ग्रीसदेशमार्गेण प्राच्यदेशान् आगतः। यस्मिन् पंचतन्त्रीये पद्ये अस्य नामोल्लेखोऽस्ति तद् आद्य-१० पंचतन्त्रान्तर्गतम् इति विश्वस्यते[2]। एवं गते ख्रीष्टसम्वत्सरप्रवर्तनाद् अर्वाग्भवम्, ५५० तमे ख्रीष्टाब्दे बर्जोयी (Barzoe)-महाशयेन पह्लवीभाषायाम् अस्य रूपान्तरकरणात् ततः[3] बहुकालपूर्वभवं च पंचतन्त्रम् इति आयाति। पह्लवीपंचतन्त्रं साम्प्रतम् अलभ्यं सदपि ५७० तमे ख्रीष्टवर्षे बूदेन (by Bud) पुरातनसीरियाभाषायाम् अनूदितं बभूव। तस्मात् ख्रीष्टस्य तृतीये वा द्वितीये एव वा शतके आद्यं पंच-१५ तन्त्रं प्रणीतं बभूव इति अनुमीयते॥

(७) भाषा—आद्यं पंचतन्त्रं संस्कृतभाषानिबद्धम् आसीद् इत्यत्र प्रायः सर्वेषां समीक्षकाणाम् ऐकमत्यं दृश्यते। यद्येवं न स्यात्, तर्हि यावदिदानीं प्राप्तानां सर्वं शाखाग्रन्थानां समानसंस्कृतैकभाषामयत्वं कथम् उपपद्येत। अथ क्षत्रियराजकुमारशिक्षार्थे दृङ्मनातनवर्णाश्रमभिज्ञेन ब्राह्मणेन एतत् प्रणीतम् इति अपि अस्माकं २० विदितम्। तत् कथं नु सम्भाव्यते यद् ईदृशो ग्रन्थः प्राकृतभाषायां विरचितः स्याद् इति॥

---

१. तत्कालस्तुतिपद्यं तु इदम्—

'ब्रह्मा रुद्रः कुमारो हरिवरुणयमा वह्निरिन्द्रः कुबेर-
श्चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वी भुजङ्गाः।
सिद्धा नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्या,
वेदास्तीर्थानि यज्ञा गणवसुमुनयः पान्तु नित्यं ग्रहाश्च॥'

२. हर्टलमतेन किंचिद् अस्य पद्यस्य महत्त्वम् अस्ति इति प्रतिभाति। तस्य तु प्रायेण २०० तमे ख्रीष्टपूर्ववर्षे पंचतन्त्रस्य प्रणयनं बभूव इति निश्चयोऽस्ति। वस्तुस्थितौ तु एतादृशो प्राचीनकाले अपि काश्चित् कथाः पुराण्यः आसन्॥

३. अर्थात् ५५० मितख्रीष्टाब्दात्॥

## ६४ पंचतन्त्रवर्णिताः अर्थाः

पञ्चतन्त्रे नानाविषयान् अधिकुर्वन्ति पच तन्त्राणि सन्ति । प्रथमे तन्त्रे भूमिकाया अनन्तर सुहृद्भेद वर्णित । अत्र च नजालरचनावत्त कथाया कथान्तरसमावेशेन परमसौहार्देन सुखम् एकत्र निवसत पिङ्गलकनामधेयस्य सिंहस्य सञ्जीवकाख्यस्य वृषभस्य च कर्टकदमनकाभ्या चतुरशृगालाभ्याम् उत्पादितस्य दौर्हृदस्य ५ कथा प्रकृता । सञ्जीवकवधानन्तर तम् अनुशोचन्त पिङ्गलक चतुरवचनारचनै सान्त्वयित्वा दमनकस्तस्य प्रधानसचिव सञ्जात ॥

मित्रसम्प्राप्तिनामके द्वितीये तन्त्रे कपोतराजस्य चित्रग्रीवस्य, मूषकस्य हिरण्यकस्य, वायसस्य लघुपतनकस्य, हरिणस्य चित्राङ्गस्य क्रमेण सिद्धस्य मिथ सख्यस्य कथा वर्णिता सारयथलेनच यथा यथा ते महान्ति दुर्गाणि उदतरन् तत्मर्वम् आख्या १० तम् । द्वितीयं तन्त्र प्रथमाद् रम्यतर भाति, 'यानि कानि च मित्राणि कर्तव्यानि शतान्यपि' इत्येतस्मिन् वाक्ये च अस्य निष्कृष्टार्थ सनिहित इव दृश्यते ॥

काकोलूकीये तृतीये तन्त्रे काकोलूकाना मिथो वैर कथा व्याजेन सन्धिविग्रहमार्गा व्याकृता । उलूकाय पक्षिराजपदे दीयमाने वायसराज विप्रतिपद्यमान सन शशबिडालकथा श्रावयित्वा नीचवंशोत्पन्नस्य राज्ये भाविनी भीतीं वर्णयति। तस्य१५ एतद् विचेष्टित दृष्ट्वा उलूकराज वैर निर्यातयितु निश्चिनोति । अथ काकराजस्य चतुरसति सचिव उलूकराजम् अभ्युपेत्य 'अवलिप्तेन काकराजेन निष्कासितोऽह शरणार्थी त्वा प्रपन्न ' इति कपटोक्तिभि मूर्खे उलूककुले सुखेन प्रवेश प्राप्नोति । अथ एकया कथया शत्रुदले भेदोत्पादनस्य लाभा व्याख्यायन्ते । अन्ते, अनुकूले काले आयाते उलूकाना दुर्गं काकै अग्निसात् क्रियते। २०

लब्धप्रणाशाभिधे तुर्ये तन्त्रे मकरमर्कटयो कथा आख्याता। कश्चिद् मकर मर्कटश्च परस्पर परममित्रे आस्ताम् । अथ तयो मैत्रीम् असहमाना मकरस्य भार्या रुग्णायते, कस्यचित् कपे हृदयमास चेद् अह भुञ्जीय तदा खलु स्वस्था स्याम् इति च स्वपति कथयति। भार्यामरणभीत मकर अनिच्छन् अपि एकदा स्वमित्र कपिं स्वगृहे भोक्तु निमन्त्रयति। यदा च मकर कपिं स्वपृष्ठम् आरोप्य जलान्त-२५ र्वर्तिं स्वगृह प्रति याति तदा कपि तत्कपटयुक्तिं विज्ञाय उक्तवान्--'आदावेव कुतो न भवता' ममेद सूचितम् । मम हृदय तु मया प्रच्छन्न वृक्षपरि एव स्थित त्वकर।' इति बालधी मकर मर्कटवचने विश्वस्य तट प्रतिनिवर्तते यत्र मर्कट स्वहृदयम् आनयेत्। तदेव मर्कटेन स्वजीवित रक्षितम् । अथ मकर पुन तस्य सख्यम् इच्छन् भूयोभूयस्तम् अभ्यर्थयति गृहभोजननिमन्त्रण च तस्मै प्रयच्छति, मर्कटस्तु तस्य वचने३० कर्णम् अनर्पयन् 'नाह रासभ यत्ते वचन प्रतीत्य त्वया सह पुन गच्छेयम्' इत्युक्त्वा रासभकथा श्रावयति ॥

अपरीक्षितकारकसञ्ज्ञके पचमे तन्त्रे अविमृश्यकारिताया दुष्फल दर्शितम् ।

केनचिद् ब्राह्मणेन एकः नकुलः पालितोऽभूत्। एकदा सुप्तस्य स्वशिशोः रक्षाभारं तस्मिन् निक्षिप्य स ब्राह्मणः कार्याद् बहिर्जगाम। अथ प्रतिनिवृत्य यदा अलिन्द-प्रविष्टः नकुलस्य मुखं रक्तेन दिग्धं पश्यति तदा 'आः शिशुर्मे नूनम् अनेन हतः' इति चिन्तयित्वा सम्यग् अविचारयन् लगुडेन तं जघान। वस्तुतस्तु नकुलेन सर्पम् एकं हत्वा शिशुः अरक्ष्यत। अथ ब्राह्मणस्य पत्नी अपि अनुशोचते तस्य नापितस्य च कथां ५ श्रावयति यः अविचार्यकृतेन कर्मणा स्वप्राणान् अपि जहाति॥

प्रथमतन्त्रत्रयं व्यपेक्ष्य अन्तिमं तंत्रद्वयम् अतीव कृशकायं विलोक्यते। कति-पयेषु प्राचीनपुस्तकेषु एतद् हि तंत्रद्वयं स्वल्पक्षीणकलेवरं खलु दृश्यते। तत्र हि तत् प्रथमतंत्रत्रयस्य परिशिष्टद्वयम् इव खलु प्रतिभाति[1]॥

## ६५ पंचतन्त्रस्य शैली

(१) इयया मनोरमया च रीत्या राजधर्मस्य लोकव्यवहारस्य च शिक्षार्थम् एव पञ्चतन्त्रं प्रवृत्तम् इति तावद् उपरितनाद् वर्णनात् स्पष्टम् एव। अत्र वर्णितासु बुद्धि-वर्धनीषु विनोदकरासु च कथासु पात्राणि प्रायः पश्वादयः। इह सामान्य पशुकथा-स्वरूपं राजनयशिक्षया तथा मिश्रितं वर्तते यथा कथा स्वयं स्वरूपेण रम्या सती कस्याश्चन आचारशिक्षायाः वा राजनीति-शिक्षायाः वा भृशानुरूपं निदर्शनं१५ सम्पद्यते। तथाहि प्रथमस्य तन्त्रस्य प्रथमायां कथायाम् 'अन्येषां कार्ये हस्तक्षेपोऽनुचितः' इत्यर्थं निदर्शयितुं तस्य वानरस्य वृत्तं वर्णितं यः क्रकचेन कृत्यमानस्य फलकद्वयस्य अन्तराले प्रवेशितां काष्ठकणाम् उद्धीर्षन् पञ्चत्वं गतः। प्रथमस्यैव तन्त्रस्य एक-विंश्यां कथायां महाभारतप्रसिद्धा शठं प्रति शाठ्यमाचरेद् इति लोकोक्तिः दृष्टान्तिता। तथाहि, परदेशं गच्छन् कश्चित् पुरुषः आयसीं स्वतुलां कस्यचित् स्वमित्रस्य२० वणिजः अभ्यर्णे स्थापयति। परदेशात् प्रतिनिवृत्य तेन तां तुलां प्रत्यर्पयितुं प्रार्थितः

१. प्रत्येकतन्त्रपरिमाणं व्यञ्जयितुं १६०२ तमे ख्रीष्टाब्दे निर्णयसागरमुद्रणालये मुद्रितात् पंचतन्त्रात् पंचानां तन्त्राणां प्रत्येकं पृष्ठ-पद्य-कथा संख्याः अधोऽवतार्यन्ते।

| | पृष्ठ संख्या | पद्य संख्या | कथा संख्या |
|---|---|---|---|
| भूमिका | ३ | १० | शून्यम् |
| प्रथमतन्त्रम् | ६२ | ४६१ | २२ |
| द्वितीयतन्त्रम् | ३६ | १६६ | ६ |
| तृतीयतन्त्रम् | ४६ | २५४ | १६ |
| चतुर्थतन्त्रम् | २६ | ८० | ११ |
| पञ्चमतन्त्रम् | ३० | ६८ | १४ |

२. आसां कथानां मुख्यमुद्देश्यं व्यवहार्यराज्यधर्मस्यैव शासनं आचारस्य तु गौणम्। अतः व्यवहारचातुर्यशिक्षापराः अपि काश्चित् कथाः दृश्यन्ते। प्रथमतन्त्रस्य चतुरजम्बुकयोः कथया च एतद् व्यवहारचातुर्यं सम्यक् निदर्शितम्॥

वने सिंहो मदोन्मत्त शशकेन निपातित ।' इत्यत्र,
'अर्थस्योपार्जन कृत्वा नैव भोग समश्नुते ।
अरण्य महदासाद्य मूढ सोमिलको यथा ।' इत्यत्र च ॥

(७) कतिचिच्च पद्यानि पञ्चतन्त्रे वर्णनपराणि अपि लभ्यन्ते । यथा,
•'वातवृष्टिविधूतस्य मृगयूथस्य धावत । ५
पृष्ठतोऽनुगमिष्यामि कदा तन्मे भविष्यति ।, इति ॥

पञ्चतन्त्रकर्तु एव कृति इमानि पद्यानि इत्यत्र तु न कोऽपि सन्देह । अना यासेनैव इमानि पञ्चतन्त्रे समावेशम् आगतानि इति ज्ञायते, अन्यथा अप्रमाद गद्येनैव वस्तुवर्णन कुर्वन् ग्रन्थकार कथ नु इमानि अत्र समावेशयिष्यत् (पद्यानि तु केवलम् उपदेशिकानि वा स्थाशीर्षकप्रदायीनि च। खलु दृश्यन्ते¹) । १०

(८) भाषा पञ्चतन्त्रस्य प्रायश प्राञ्जला, शुद्धा, प्रसन्ना च । यद्येव नाभविष्यत् कथ तर्हि तत्तद्राजकुमाराणा नीतौ विनयन यत् कर्त्रा स्वय प्रदर्शित ग्रन्थोद्देश्य तद् असेत्स्यत् । छन्द सु अत्र अनुष्टुभ प्राधान्य विलोक्यते तत्र च रामायणमहाभारत-स्मृतीना शैलीम् अनुसरता ग्रन्थकारेण दीर्घसमासा क्लिष्टरचनाश्च वर्जिता । यथा,

'आपत्काले तु सम्प्राप्ते यन्मित्र मित्रमेव तत् । १५
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद् भवेत् ॥ (२,११८)
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथै ।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगा ॥ (३ ३८)
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कोऽर्थ पुत्रेण जातेन यो न विद्वान् न भक्तिमान् ॥' इति (भूमिका, ७) २०

अति सरलत्वादेव ईदृशानि पद्यानि प्रारम्भकच्छात्राणा पाठ्यपुस्तकेषु प्राय सङ्गृहीतानि ॥

क्वचित् तु दुष्करेषु छन्द सु दीर्घसमासप्रयोगोऽपि दृष्टिपथम् अवतरति । यथा,

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगूह्य स्वकं, २५
सत्त्वोत्साहवताऽपि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात् ।
देवेन्द्र-द्रविणेश्वरान्तकसमैरप्यन्विता भ्रातृभि ,
किं क्लिष्ट सुचिर त्रिदण्डमवहन्छ्रीमान् न धर्मात्मज ।'' (३,२२३) इत्यत्र॥

तदनन्तरकालभवाना काव्याना शैल्या सह तोलनेन तु एषा दीर्घसमासरचना ऽपि सरलेव प्रतिभाति । वक्ष्यमाण पद्य यत्र नृपसचिवयो सम्बन्ध वर्णित मुद्रा ३० राक्षसे अपि प्राप्यते—

---

१ वस्तुवर्णनपराणि पद्यानि जातकमालासु चम्पूग्रन्थेषु च बाहुल्येन लभ्यन्ते, तत्र हि रचयिता कथां गद्यपद्योभाभ्यां ययैव निबध्नाति ॥

'अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयो द्वयोरेकतरं जहाति ॥'

गद्यं तु अस्य न कथंचिदपि तथा कठिनं यथा दण्डिनः बाणस्य वा; वस्तु- ५
तस्तु एतद् जातक-चम्पूग्रन्थानां गद्याद् अपि सरलम् । अत्र 'क्त'-प्रभृतिकृत्प्रत्ययानां बहुलः प्रयोगः दृश्यते । भूतकालार्थं प्रायः क्तप्रत्ययसिद्धः ऐतिहासिकवर्तमानकालिक-प्रत्ययनिष्पन्नो वा शब्दः प्रयुक्तः । कर्तरिप्रयोगापेक्षया च कर्मणिप्रयोगस्य आधिक्यम् अवलोक्यते । वस्तुतः कृदन्तानामेव प्रयोगोऽधिकतरोऽत्र न तु तिङन्तानाम् ॥

## ६६ तन्त्राख्यायिका

पञ्चतन्त्रस्यैव खलु रूपविशेषः तन्त्राख्यायिकानाम्ना व्यवह्रियते । शारदा-लिप्यां लिखितम् अस्याः अद्यावधि एकमेव पुस्तकं कश्मीरदेशे प्राप्तम् । वर्तमान ख्रीष्टशतकस्य मुखे अन्वेषणरतस्य हर्टलमहाशयस्य हस्तं गता एषा। तन्मतेन अस्याः शाखाद्वयं वर्तते । एका तेन 'अ' संज्ञया व्यवहृता अपरा च 'ब-' संज्ञया । अपि च तस्य मते 'अ' संज्ञिता शाखा अधिकमौलिकी, ऐजर्टनस्य मते तु 'ब' संज्ञिता ॥ १५

हर्टलस्य तन्त्राख्यायिकायां अतिमहती आस्था दृश्यते[1] । परं तादृशीम् आस्थाम् अवघ्नताम् अपि आलोचकानां मतेन तन्त्राख्यायिकायाम् आद्यपंचतन्त्रस्य यावान् मौलिकोंऽशः सुरक्षितस्तिष्ठति न तावान् एकस्मिन् अपि पंचतन्त्रस्य रूपान्तरे। पंचतन्त्रस्य विविधानि रूपान्तराणि वस्तु विवर्धनप्रसारणयोः हेतोः मूलपंचतन्त्राद् यथा भिद्यन्ते न तथा वस्तु निस्सारण परिवर्तनयोः हेतोः । प्रक्षिप्तासु कथासु नील- २०
शृगालस्य (१,८), चतुरजम्बुकस्य (१.१३), तन्तुवायस्य सोमिलकस्य (२,४), कुटिल-कुट्टिन्याः (३,५), नृपशिबेः (३,७), वृद्धहंसस्य (३,११), लशुन चौरस्य (४,१), वीर-वेषधारिणश्च कथाः अत्र उल्लेखम् अर्हन्ति । आसां कासुचिद् लुङ्लकारस्य बहुल-प्रयोगदर्शनात् तासां प्रक्षिप्तत्वं स्पष्टम् । कदा नु एषा तन्त्राख्यायिका निर्मिताऽभूद् इति प्रश्नस्तु यथावत् प्रतिवक्तुम् अशक्यः ॥ २५

## ६७ 'सरलग्रन्थः' (The Textus Simplicior)

अत्र हि ग्रन्थे वस्तुयोजनिकाक्रमे प्रतिपाद्यार्थे च महत् परिवर्तनं विहितं विलोक्यते । इह पञ्च अपि तन्त्राणि प्रायः समान परिमाणकानि कृतानि, तृतीय-तन्त्रस्य कियत्यः कथाश्च चतुर्थे तन्त्रे सन्निवेशिताः सन्ति । सर्वेषु अथ च तन्त्रेषु

१. हर्टलमतेन केवलं तन्त्राख्यायिकायाम् एव मूलपंचतन्त्रस्य सा भाषा उपलभ्यते या शब्दैः न च संक्षिप्ता न च अभिसन्धाय परिवर्तिता । अन्येषां मते तु पंचतन्त्रस्य कतिपयेषु रूपान्तरेषु अपि एतादृशी भाषा अवलोक्यते ॥

प्रक्षेपः कृतो लभ्यते । तृतीयचतुर्थपंचमानां तन्त्राणां कथावस्तुषु तत्र तत्र परिवृत्तिः अस्ति कृता । यथा; पंचमे तन्त्रे नापितकथा प्रधानायते, नकुलकथा च तत्र प्रक्षिप्ताऽस्ति । कतिपयास्तु आसु अभिनवासु कथासु ललिताः खलु सन्ति । तथाहि आत्मनः विष्णुत्वं ख्यापयतः कस्यचित् तुन्नवायस्य यथावद् रूपं देवैः सह आत्मसम्बन्धं प्रख्याप्य दृप्यतः नृपविशेषस्य बालिशकर्मणा एव विम्रियते । यदा च नृपोऽसौ ५ सीमासन्नजनपदाधिपतिभिः नृपतिभिः सह सङ्ग्रामम् उत्थाप्य स्वयं परामृश्यमानो भवति तदा स्वयशः रक्षिष्यन् भगवान् विष्णुः वैकुण्ठाद् अवतीर्य तम् अवति ॥

अस्य पाठाः तन्त्राख्यायिकापाठैः सह अधिकतरं साम्यं वहन्ति । आद्यपञ्चतन्त्रस्य श्लोकानां प्रायः तृतीयोंऽशः अत्र सुरक्षितः । अत्र च वैदिकधर्मसम्प्रदायेषु प्रसिद्धानां मुनीनां नामानि अनुपलभ्य पाठकः जैनमुनीनां नामानि पश्यति ।१० दिगम्बर- नग्नक-क्षपणक-धर्मदेशना-प्रभृतीनां जैनसाहित्यप्रसिद्धानां पदानां प्रयोगाच्च जैनविशेषकर्तृकोऽयं ग्रन्थः इति अनुमीयते । शैली तु अस्य रम्या प्रौढा च ॥

इह माघाद् रुद्रभट्टाच्च पद्यानाम् उद्धृतत्वात् (११९९ खीष्टसम्वत्सरभवात्) पूर्णभद्राच्च नूनम्, अस्य प्राचीनत्वात् प्रायः ११०० खीष्टाब्दासन्नकालप्रसूतोऽयम् इति साधारणतः सम्भाव्यते ॥ १५

## ६८ पूर्णभद्ररचितः ग्रन्थः (पंचाख्यानकम्)

पञ्चाख्यानकनाम्ना प्रथिति गतः पूर्णभद्रकृतः ग्रन्थः अंशतः तन्त्राख्यायिकाम् अंशतः 'सरलग्रन्थस्य' पूर्वादर्शीभूतं कञ्चन ग्रन्थम् अंशतश्च कदाचित् कंचन अद्यावधि प्रकाशम् अनागतं ग्रन्थम्, उपजीव्य वै प्रणीतोऽभूत् । इह न्यूनान्यूनाः याः पञ्चविंशतिः अभिनवाः कथाः, नूनं तासां कतिपयाः रम्याः सन्ति । तथाहि द्वारि-२० ण खलु प्रकारेण एकस्यां कथायां (१,९) पशुमनुष्ययोः कृतघ्नताकृतज्ञत्वकृतं तारतम्यं द्योतितम् । अस्य अध्ययनात् 'किमपि गभीरं नीतिशास्त्रावगाहनं ग्रन्थकारेण अवगाहितं ह्यासीद्' इति मतिरुदेति । शैली अस्य सरला, प्रसादगुणसम्पन्ना, शोभना च । सोमाख्यस्य कस्यचिद् मन्त्रिणः प्रसादस्य काम्यया पूर्णभद्रेण ११९९ तमे खीष्टाब्दे ग्रन्थोऽयं लिखितः ॥ २५

## ६९ दक्षिणापथीयं पंचतन्त्रम् ।

दक्षिणापथे प्रचारं गतस्य पंचतन्त्रस्य पंचशाखाः लभ्यन्ते । यदेव मूलं नेपालीयस्य पचतन्त्रस्य च हितोपदेशस्य च तदेव आसां शाखानाम् । वस्तुतः दक्षिणापथीये पंचतन्त्रे अस्मिन् यावान् प्राक्तिकपञ्चतन्त्रांशः तावान् न च 'सरलग्रन्थे' न च पूर्णभद्रीये पञ्चाख्यानके । ऐजर्टनमतेन आद्यस्य पंचतन्त्रस्य पद्यभागस्य द्वौ तृतीयांशौ गद्यभागस्य च त्रयश्चतुर्थांशाः खलु अत्र सुरक्षिताः । आसु पंचसु शाखासु एकैव-३०

1. कदाचित्तु 'सरलग्रन्थो'ऽपि एतन्नाम्ना व्यवहारं गच्छति ॥

उपलब्धिताऽस्ति यत्र पञ्चनवतिः कथाः अधीयन्ते, अन्याश्चतस्रः आद्यपंचतंत्रस्य अमहत्त्वास्पदानि कथावस्तुभागान् बहुशः अविभ्रंश्यः प्रायेण सङ्क्षिप्ताः एव। नेपालीये इव इह दक्षिणापथीये पंचतन्त्रेऽपि कालिदासस्य पद्यम् एकम् उद्धृतं दृश्यते, तस्मात् कालिदासोत्तरं प्रादुर्भूतोऽयं ग्रन्थः इति कल्पयितुं शक्यम्। काः काः कथाः अत्र प्रक्षिप्ताः इति जिज्ञासायां तु गोपिकायाः (१,५८), एका उदाहार्या॥ ५

## ७० नैपालं पञ्चतन्त्रम्

नेपालस्य पञ्चतन्त्रस्य तावद् अनेकानि हस्ताङ्कितपुस्तकानि अद्यावधि हस्त गतानि। एषाम् एकस्मिन् पद्यभागमात्रम्[1] इतरेषु तु संस्कृतलिप्यां वा नेवारीलिप्यां वा पद्यभागेन सहितः गद्यभागोऽपि लभ्यते। इह प्रथमद्वितीयतन्त्रयोः प्रसिद्धः क्रमः व्यत्यस्य नीतोऽस्ति। अस्य रचयित्रा आद्यं पञ्चतन्त्रं, हितोपदेशस्य अपि उपजी-१० व्यम्, अवश्यम् अनुशीलितम् इति विश्वस्यते। अत्र कालिदासात् पद्यस्य एकस्य उद्धरणात् कालिदासाद् अर्वाचीनम् अदः इति धारणां विहाय नान्यत् किमपि अस्य अथनिर्माणकालम् आकलयितुं शक्यम्॥

## ७१ हितोपदेशः

पंचतन्त्रस्य रूपान्तरविशेषस्य हितोपदेशस्य प्राधान्येन प्रचारः वङ्गेषु एव। १५ वस्तुतः तत्र पंचतन्त्रस्य सर्वरूपान्तराणि प्रचाराऽऽसनात् प्रभ्रश्य अनेन स्वयम् एकच्छत्रम् आसनम् अधिष्ठीयते। एष महाराजधवलचन्द्रस्य[2] कृपाश्रितेन केन- चिन्नारायणाभिधेन पण्डितेन निष्पादित आसीत्। अत्र ग्रन्थादौ मङ्गलाचरणे धूर्जटेः, चन्द्रार्धचूडामणेः (१,१७८), चन्द्रमौलेश्च स्तुतिदर्शनात् शैवः खलु नारायणः अभवद् इति आयाति। ग्रन्थोद्देश्यं कीर्तयता ग्रन्थकारेण स्वयम् उक्तं यद् बालबुद्धि-२० गम्याभिः सरलरुचिरकथाभिः पाठकानां संस्कृतभाषाविबोधं विधातुं वाक्चातुर्यं रचयितुं नीतिविद्यां च वेदयितुम् एष ग्रन्थः सङ्गृहीतः इति। तच्चैतत् सर्वं हितो- पदेशस्य आभ्यां पद्याभ्यां स्पष्टम्—

'श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च॥' (प्रस्ताविका, ८) २५

---

1. अत्र गद्यस्थलम् अप्येकं दृश्यते। तच्च प्रमादात् तत्र पतम् प्रतिभात इति अवधार्यते॥

2. तथाहि पठ्यते हितोपदेशे पद्यमिदम्—
'श्रीमान् धवलचन्द्रोऽसौ जीयान्माण्डलिको रिपून्।
येनायं संग्रहो यत्नाल्लेखयित्वा प्रचारितः॥' (४,१३६)

3. दृश्यतां श्लोकोऽयम्—
'यावत् स्वर्णाचलोऽयं दवदहनसमो यस्य सूर्यः स्फुलिङ्गः।
तावन्नारायणेन प्रचरतु रचितः संग्रहोऽयं कथानाम्॥' (४,१३८)

'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥' (प्रस्ताविका,८)

प्रस्ताविकायां नवमपद्ये रचयित्रा स्वयं स्वीकृत यत् पंचतन्त्रं ग्रन्थान्तरं चैकम् उपादाय एव अस्य ग्रन्थस्य सङ्ग्रहोऽजनि इति। किन्नामधेयं ग्रन्थान्तरं चेदम्? इति प्रतिवक्तुं तावन्न सुकरम् यतः पंचतन्त्रापेक्षया सप्तदश नवाः कथाः इह सङ्गृ-५ हीताः, तस्मात् किमपि पशुपक्षिकथामयेन तेन 'ग्रन्थान्तरेण' भवितव्यम् इति तावत् प्रतिभाति। नारायणपण्डितेन अत्र वर्धितासु सप्तदशासु कथासु द्वे केवले आचार-शिक्षापरे, शेषासु पञ्चदशासु सप्त पशुपक्षिकथाः, पञ्च प्रणयिवृत्तान्तवर्णनपराः, तिस्रश्च साधारणजनमनोरञ्जनकर्यः अप्सरः प्रभृतिकथाः सन्ति इत्यतः सिध्यति यद् आचारशिक्षा अस्य ग्रन्थस्य मुख्यम् उद्देश्यम् नैवास्ति इति, उद्देश्यविषये नारायण-१० पण्डितेन मूलपञ्चतन्त्रकारस्यैव पदाङ्काः अनुसृताः इति च। यस्यां च मुनिना मूषिकः प्रथमं मार्जारः, ततः कुक्कुरः, ततः व्याघ्रश्च कृतः, अथ यदा व्याघ्रीकृतः मूषिकः तं मुनिम् एव हन्तुम् उद्यतः तदा तेन 'पुनर्मूषिको भव' इत्युक्त्वा पुनः मूषिकः कृतः, सा मुनिमूषिककथा महाभारताद् गृहीता भाति। चतुरमतिस्त्रीकथा या अत्र (२,६) पठ्यते सा शुकसप्तत्याम् अपि पठ्यते; अपि च, इहत्या वीरवरकथा१५ वेतालपञ्चविंशतिकायाम् अपि अधीयते। नीतिशास्त्रेषु अस्य महान् आधारः का-मन्दकीयं नीतिसारं खलु अस्ति ॥

कालः—(१) हितोपदेशस्य नेपालप्राप्ते हस्ताङ्कितपुस्तके तदङ्कनकालः १३७३ खी. लभ्यते, तत् ततः प्राचीनेन अनेन भवितव्यम्।

(२) माघात् कामन्दकीनीतिसाराच्च बहुतरार्थजातोपादानात् ताभ्याम् अर्वाची-२० नेन च अनेन भाव्यम्।

(३) अत्र 'भट्टारकवार'— शब्दप्रयोगदर्शनाद् ६०० तमात् खीष्टाब्दाद् अर्वाची-नोऽयमिति विभाव्यते ॥

(४) अत्र लभ्या कथा एका शुकसप्ततौ अपरा च वेतालपञ्चविंशतिकायाम् अवाप्यते इत्येतत् तु अस्य कालावधारणे न किंचिद् उपकारके भवति। २५

वर्ण्यवस्तुरूपरेखा।

६६ मित्र लाभ-सुहृद्भेद-विग्रह-सन्धि नामानः चत्वारः सङ्ग्रहाः सन्ति। आद्यपंचतन्त्रस्य प्रथमद्वितीयतन्त्रे अत्र क्रमेण द्वितीयप्रथमे कृते। पंचतन्त्रस्य चतुर्थं तन्त्रं परित्यज्य तृतीयपंचमतन्त्रे यथाक्रमं विग्रहसन्धिनामकयोः सङ्ग्रहयोः अभि-नवरूपतां नीते। सन्धिनामके सङ्ग्रहे नूत्ना एका कथा योजिता पंचतन्त्रस्य च३० प्रथमतृतीयतन्त्राभ्यां कतिपयानि कथान्तराणि उद्धृत्य इह धृतानि। तदेवं संयोजन-वियोजन-उपायसनैः शिल्पिते हितोपदेशे पंचतन्त्रस्य पद्यभागस्य प्रायेण तृतीयांशः गद्यभागस्य च द्वौ पंचमांशौ समागतौ ॥

शैली—बालानां संस्कृतस्य नीतिविद्यायाश्च शिक्षायै हितोपदेशः निबद्धः, तस्माद् यथोद्देश्यं भाषा अस्य सरला स्वच्छा रुचिरा च। दीर्घसमासक्लिष्टरचनयोः प्रयोगः यदि क्वचिद् विलोक्यते तर्हि उद्धृतेषु पद्येषु एव। पांचतन्त्रिकीं पद्धतिम् अनुसरता अस्य रचयित्राऽपि तिङन्तस्थाने प्रायः कृदन्ताः एव प्रयोगाः प्रयुक्ताः। एतत्कर्तुः कृतित्वेन प्रतीयमानेभ्यः कतिपयेभ्यः पद्येभ्यः तस्य सुकवित्वं स्फुटी- ५ भवति। न केवलं वङ्गेषु एव प्रत्युत भारते सर्वत्र हितोपदेशस्य सुप्रचरितत्वाद् वङ्गाली–हिन्दी प्रभृतिषु नानाधुनिकभारतीयभाषासु अस्य अनुवादाः अजायन्त। अधो ऽवतार्यमाणैः गद्यपद्यैः अस्य भाषासारल्यं स्पष्टम्—

'तद् भवतां विनोदाय काककूर्मादीनां विचित्रां कथां कथयामि। राजपुत्रैरुक्तं कथ्यताम्। विष्णुशर्मोवाच श्रूयतां सम्प्रति मित्रलाभः, यस्यायमाद्यः श्लोकः॥' १०

माता शत्रुः पिता वैरी येन बालो न पाठितः।

न शोभते सभामध्ये हंसमध्ये बको यथा॥' (प्रस्ताविका, २५)

'यथा ह्येकेन चक्रेण न रथस्य गतिं भवेत्।

एवं पुरुषकारेण विना दैवं न सिध्यति॥' (प्रस्ताविका, २०)

## ७२ बृहत्कथान्तर्गतं पञ्चतन्त्रम् अथवा उत्तरपश्चिमीयं पञ्चतन्त्रम्

बृहत्कथामञ्जर्यां कथासरित्सागरे च पञ्चतन्त्रस्य यद् रूपम् उपलभ्यते तद् मौलिक्यां बृहत्कथायाम् अस्थित। कदाचिद् भूरिविरेण सम्भवतः कश्मीरेषु अङ्गोपचयं प्राप। रूपान्तरेषु स्थिता भूमिका प्रथमतन्त्रस्य तृतीया कथा च अत्र नोपलभ्यते। प्रत्येकतन्त्रद्वयस्य सन्धौ बाह्यकथावस्तुनः प्रक्षेपं विधाय अस्य पञ्चाऽपि१० तन्त्राणि अन्योन्यस्मात् पृथक् कृतानि इव आभान्ति। क्षेमेन्द्रकृतौ अस्य अतिसङ्क्षेपात् सोमदेवकृतौ च अस्य कासांचिद् मौलिककथानाम् अपि अभावाद् एतद्यथार्थपाठशरीरं दुरवधारम्॥

## ७३ पञ्चतन्त्रकथानां पह्लवीरूपान्तरं, पश्चिमदिग्यात्रा च

खोसरौ अनौशर्वान् (५३१-५७६ खी.) राज्यकाले वैद्यवरबार्जोयीप्रयासेन१५ पञ्चतन्त्रं पह्लवीभाषायां कर्टक-दमनकेतिनाम्ना रूपान्तरितं बभूव। अस्य स्वरूपेण भृशं तन्त्राख्यायिकास्वरूपानुहारिणा भवितव्यम् इति आस्थीयते। हन्त अचिरात् पह्लवीपंचतन्त्रम् प्रणष्टम् अभूत्। रूपान्तरं तु अस्य ५७० तमे खीष्टाब्दे 'बूद' प्रयत्नात् पुरातन्यां सीरियादेशभाषायां निष्पन्नं यस्य केवलम् एकम् अपूर्णं हस्तलिखितं पुस्तकम् अद्य प्राप्तं वर्तते। एतत् तु पुनः ७५० तमे खीष्टाब्दे अब्दुल्ला-इब्नुल-२०

मीकस्कानाम्ना विदुषा कलील व दिम्न इतिनाम्ना अरवभाषाया रूपान्तरितम्। एतद् अरवभाषापञ्चतन्त्रम् एव शेषाशेषपश्चिमदेशभाषापचतन्त्राणां मूलम् इति हेतुना अस्य गौरव महत्। प्राय दशमे वा एकादशे वा खीष्टशतके तदानीन्तन्यां सीरियाभाषाया १२५१ तमे च खीष्टाब्दे स्पेनदेशभाषायाम् इदम् अनूदित अभूत। एतयो अनुवादयो भूय काचित् प्रसृति न विज्ञायते। १०८० तमस्य खीष्टवर्षस्य आसन्ने ५ काले अरवभाषापचतन्त्रस्य यद् रूपान्तर ग्रीकभाषानिबद्ध अभूत तस्माद् इटलीभाषामयस्य (१५८३ तमे खीष्टाब्दे गिउलिओनूति नामकेन पुरुषेण सम्पादितस्य), जर्मनभाषामयस्य, द्वयो लैटिन भाषामययो सिविरलैगोनिक भाषामयाना च पचतन्त्राणाम् उत्पत्तिरभवत्। अनेकस्थलविस्तृतत्वाद् हिब्रुभाषामयस्य पचतन्त्रस्य महत्त्व स्वजनकाद् अरवभाषामयस्य पञ्चतन्त्रस्य महत्त्वाद् १० अपि न्यूनकल्प्यते। ११०० तमे खीष्टसम्वत्सरे रवि जोईलेन अरवभाषात हिब्रुभाषाया योऽनुवाद कृत तस्य पुन अनुवाद १२६३ तमस्य १२७८ तमस्य च खीष्टवर्षस्य अन्तराले कापुआ वास्तव्येन जोहेन लैटिनभाषायाम् अनन्तर। एष हि ग्रन्थ १४८० तमे खीष्टाब्दे हि मुद्रितोऽभूत्। १४८३ तमे खीष्टाब्दे ऐनथाम्यस-वान् फार- (Anthonius von Pforr) नामा१५ कश्चिज्जर्मन इम पुन जर्मनभाषया अनूवाद। तत प्रभृति अय बहुश मुद्रितोऽस्ति। जर्मनसाहित्यस्य अनेन भृश प्रभावितत्वाद्, डेनमार्कादिविविधदेशभाषासु च जातानाम् नानानुवादानाम् आधारत्वाद् इदम् अपि रूपान्तर नून माननीयम्। अस्यैव अनुवादा आइसलैण्ड डेनमार्क हालैण्ड स्पेनदेशभाषासु जाता। १४९३ तमे खीष्टाब्दे जातस्य स्पेनदेशभाषानुवादस्य पुन अनुवाद १५४८ तमे खीष्टाब्दे२० इटलीभाषायाम् अभूत्, स च १५५६ तमे खीष्टाब्दे फ्रेंचभाषया रूपान्तर जगाम॥

लैटिनभाषानुवादस्य एकेन डोनिकत भाषान्तराव्यवहित इटैल्यनभाषानुवाद १५५२ तमे खीष्टाब्दे वीनिसनगरे द्वाभ्या भागाभ्या प्रकाशितोऽभूत्। अनयो प्रथमभाग सरटामसनार्थ १५७० तमे खीष्टाब्दे आंगलभाषया अनूदितवान्॥

पचदशशताब्दस्य पूर्वार्द्धे अबुल् मआली नस्रल्ला अरवभाषानुवाद पार २५ सीकभाषाया परिवर्तयामास। एत पारसीकभाषानुवाद १४९४ तम खीष्टवर्षे निकषा हुसेन वाइजे काशिफि नाम्ना अन्येन पारसीकभाषायाम् एव रूपान्तरयामास। षोडशशताब्दस्य प्रथमपादे अली चलेबि अनवारे सुहेली तुर्कभाषया निबबन्ध। सा तुरुष्कभाषामयी अन्वारे सुहेली च फ्रेंचभाषायामपि कृत्वा पुन हालैण्ड हंगरीजर्मनी मलयादिदेशभाषासु सिद्धम् अभवत॥ ३०

अस्मा पचतन्त्रकथाना महत्त्वशाली उपयोग यथा ला फाटेन (La Fontaine) महाशयेन कृत न तथा केनचिद् अपरेण। स कुत्रासुनि स्वग्रन्थस्य द्वितीये

मुद्रणावसरे (१३५८ख.) तेन स्वयं स्वीक्रियते यत् प्रत्यग्रकथासामग्र्याः (सप्तमाद् अध्यायाद् आरभ्य एकादशाध्यायपर्यन्तं निवेशितायाः) भूयान् भागः मया पिल्पे-नाम्नः[1] भारतीयमुनेः ग्रन्थाद् गृहीतः इति। अथ विद्यार्थिनां पंचतन्त्रस्य पश्चिमदिग्यात्रावृत्तान्तस्य झटिति बोधः स्यादिति विचार्य अग्रे तस्य चित्रमेकमारोप्यते ॥

---

१. विद्यापतिशब्दस्य, अपभ्रंशः खलु पिल्पे ॥

## पञ्चतन्त्रकथानां पश्चिम दिग्यात्राविशुनम् आलेख्यम्

- पञ्चतन्त्रम्
  - तन्त्राख्यायिका
    - बारजोयीकृतं सम्प्रति प्रणष्टं पह्लवीरूपान्तरम् (५३१-५७६)
      - बूदकृतं पुरातनसीरियाभाषारूपान्तरम् (५७०)
      - अब्दल्लः कृतं अरबभाषारूपान्तरम् (७५०)
        - मध्ययुगीयसीरियाभाषानुवादः (१०८०-११००)
        - पुरातनस्पेनभाषानुवादः (१२५१)
        - ग्रीकभाषामयम् रूपान्तरम् (१०८०)
          - इटैल्यनानुवादः (१५८३)
          - लैटिनानुवादः
          - जर्मनानुवादः
          - स्लैवोनिकभाषासु अनुवादः
        - रब्बानिजोईलकृतः हिब्रूभाषानुवादः (११००)
          - कापुआवास्तव्येन जोह्नेन कृतः लैटिनानुवादः (१२६३-७८) (१४८० समे मुद्रितः)
            - ए. दोनिकृतः इटैल्यनानुवादः (१५५२)
              - सरटामसनार्थकृतः आंगलानुवादः (१५७०)
            - ऐन्थान्यसवान् क्रारकृतः जर्मनानुवादः (१४८३)
              - डेनमार्कभाषामयम्
              - आईसलैंड भाषामयम्
              - डचभाषामयम्
              - स्पेनभाषामयं (१४९३)
                - इटलीभाषामयं (१५४६)
                  - फ्रांसभाषामयम् (१५५६)
        - नसरल्लः कृतं पारसीकभाषारूपान्तरम् (प्रायेण ११३०)
          - हुसेन कृतम् अन्वारे सुहेली-नामकं रूपान्तरम् (१४९४)
            - अलीकृतं तुरुष्कभाषामय (१६ शतकम्)
              - फ्रेंचभाषामयम्
                - जर्मनभाषामयम्
                - डचभाषामयम्
                - हंगरीभाषामयम्
                - मलक्काभाषामयम्
            - प्राच्यभाषासु रूपान्तराणि

–मतेन मृतपितॄन् प्रति श्रद्धा सर्वधर्माणां मूलं खल्वस्ति । न केवलं भारते एव वर्षे अपितु निखिले महीमण्डले मृतात्मनां प्रसादनार्थं पुरा रूपकाणि अभ्यनीयन्त । प्रमाणं तु एतद्धारणासाधकं किमपि नैव दृश्यते । अथ देशान्तरविषये क्वचिद् धारणा एषा सत्या भवतु नाम भारतविषये तु असत्यैवेत्यैव ॥

(आ) परन्तु अभिनयेभ्यः रूपकाणां विकासः इति दृष्टिः ॥ ५

इन्द्रध्वजोत्सवे अभिनयोल्लेखात् केचिद् इमां दृष्टिमाश्रयन् । एतद्दृष्टिमन्तः हि 'भारतीयेन्द्रध्वजोत्सवः यूरोपीयेन (May Pole) मे-पोलाख्येन उत्सवेन साम्यम् आवहति; क्लेश बहुलायाः शरद्-अनन्तरं वसन्ते प्रायेण सर्वे सभ्यजनपदाः कञ्चन उत्सवं मानयन्ति; एषु उत्सवावसरेषु कृताभ्य. प्रमोद्–खेलालीलाभ्यः उत्पन्नेन ननु रूपकेण भवितव्यम्' इति आकलयन्ति । परं वृत्रस्य (मेघस्य) उपरि इन्द्रविजयं स्मारयन्१० इन्द्रध्वजो नाम उत्सवः वर्षर्तौ अवसाने एव तु मान्यते न तु वसन्ते इति कारणाद्, आपाततः उत्तमशोभा अपि दृष्टि एषा न निर्दोषा ॥

(इ) कृष्णभक्ति प्रचाराद् रूपकम् उद्भूतम् इति दर्शनम् ।

अस्मिन् दर्शने नाट्याङ्गानां कृष्णभक्त्यङ्गैः दृढान्वयात् कृष्ण भक्ति-प्रचाराद् रूपकस्य उद्भवः इति अभ्युपगम्यते । तथाहि कृष्ण भक्ति सम्प्रदाये रथयात्रा,१५ गीतं, वाद्यं, नृत्यं, लीला चेति अङ्गानि प्रथितानि । लीला चैव नाट्यस्य आदिमं स्वरूपम् इत्यत्र क सन्देहः । अपि च, रूपकेषु शौरसेनीप्राकृतस्य प्रधानं स्थानम् । तस्य च जन्मस्थानं कृष्णभक्तिसम्प्रदायस्य हृदयपवित्रदेशः व्रजमण्डलम् एव । अथ यथा अद्यत्वे कृष्णभक्ति-प्रचाराद् व्रजभाषाया अपि लोकप्रचलने प्रयत्नः तथैव पुरा अपि कृष्णभक्तिप्रचारः रूपकोत्थाने बलवद् उपचकार इति वचनं कस्य व्यभिचारि२० भावाद् इति ॥

आपातरम्यम् अपि दर्शनम् इदं दोषद्वयदूषितं खलु अस्ति । प्रथमं तावत् कृष्णभक्ति सम्बद्धानि रूपकाणि एव प्राचीनतमानि रूपकाणि आसन् इत्यस्य साधकं प्रमाणं नोपलभ्यते । अपरं च, रामभक्ति शिवभक्ति-देवतान्तरभक्ति सम्प्रदायैः अपि रूपकोन्नयने य महान् उपकारः कृत स हि दर्शनेऽत्र उपेक्ष्यते इति ॥ २५

(ग) लौकिक मनोवृत्तिजन्यत्ववादः

[अ] लोकप्रचरितरासजन्यत्वमतम् (Popular mime theory)

अध्यापकहिल्लेब्रैण्ड (Hille Brandt) स्तेनकोनो (Sten Konow)-महाशययोः मतेन संस्कृतरूपकोद्भवात् प्राक् लोकप्रचरित रास रामायणमहाभारत कथाभ्यां सह मिलित्वा नाट्यं जनयामास ॥ ३०

डाक्टर कीथ (Keith) महोदयस्तु इदं निराकुर्वन् कथयति यत् संस्कृत

रूपकोद्भवात् प्राक् लोकप्रचरितस्य रासस्य सद्भावे पर्याप्तं प्रमाणं न पश्यामः । स्तेन-कोनोमहाशयेन अनुसंहिताः रासविषयकाः सर्वे उल्लेखाः महाभाष्यकालिकाः महा-भाष्याद् अपि अवरकालिकाः वा खलु सन्ति ये तत्पक्षं प्रतिष्ठापयितुं न क्षमन्ते इति । वस्तुतः कीथमतेन प्रारम्भिकरासविषयं सर्वम् अस्मज्ज्ञानं कल्पनामात्रम् ॥

अत्र हिलब्रैंडपक्षो गरीयान् इव भाति । तेन हि वक्ष्यमाणाभिः वाचोयुक्तिभिः ५ स्वपक्षः स्थाप्यते । संस्कृतरूपकेषु संस्कृतभाषया सह प्राकृतभाषाप्रयोगः तेषां सर्व-साधारणजनसम्बन्धं व्यनक्ति इति प्रथमा । तेषु गद्यपद्यमिश्रणं दृश्यते इति द्वितीया । आडम्बरशून्यः खलु भारतीयरङ्गमञ्चः इति तृतीया । विदूषकपात्रयुक्तानि खलु भारतीयरूपकाणि इति च चतुर्थी ॥

प्रकारान्तरेण तु आसां युक्तीनां युक्ततरं समाधानं सम्भवति । तथाहि प्रथमं १० तावत्, कृष्णभक्तिप्रस्थानस्य सर्वसाधारणजनसम्बन्धात् तदनुसम्बद्धेषु रूपकेषु विविधप्राकृतप्रयोगः स्वाभाविकः । अथ द्वितीयं तृतीयं च, गद्यपद्यमिश्रणं भारतीय-रङ्गमञ्चस्य अनाडम्बरितत्वं यदुक्तं तदपि संस्कृतरूपकाणां धर्मभावनाजन्यत्वस्य अनुकूलम् । अथ चतुर्थं, विदूषकस्य सन्निधिः अपि पुराकल्पे महाव्रताख्ये धर्मानु-ष्ठानविशेषे शूद्रस्य आवश्यकत्वं स्मारयन् संस्कृतरूपकाणां धर्मभावना-जन्यत्वाद्-१५ स्यैव अनुकूलो भवति । संस्कृतनाट्यस्य लौकिकमनोवृत्तिजन्यत्वे तु किञ्चित् साधकं प्रमाणं नोपलभामहे इति ॥

(आ) काष्ठपुत्तलिकानृत्यजन्यत्वमतम् । महाभारते कथासरित्सागरे राज-शेखरीये बालरामायणे च पुत्तलिका-पुत्रिका-दारुमयीप्रभृतिभिः पदैः पुनः पुनः याः क्रीडाः अभिहिताः ताभ्यः एव ननु संस्कृतरूपकम् उदभवत् इति पिशल (Pischel)-महोदयः २० पश्यति । नाटकप्रयुक्तः स्थापकशब्दश्च मतेऽत्र सम्यक् स्फुटार्थो भवति । किन्तु अत्र विप्रतिपद्यमानः हिलब्रैंडमहोदयः उद्भावयति यत् पुत्तलिकानृत्येन तत्पूर्वभाविनः नाट्याद् लब्धोदयेन नूनं भवितव्यम् । तस्मात् पुत्तलिकानृत्याद् उन्नतिम् आगतं नाट्यमिति वचनम् असङ्गतम् इति ॥

(इ) छायानाटकजन्यत्वमतम् । अध्यापकलूडर्स (Luders)-मतेन तु छाया-२५ नाटकजन्यं खलु संस्कृतरूपकम् । अस्मिंश्च मते रूपकशब्दः मुख्यार्थो भवति । परं 'महाभाष्यीयस्थलविशेषस्य विरुद्धार्थबोधाद् मतम् इदम् उत्थितम्' इति ब्रुवता डाक्टरकीथमहोदयेन मतम् एतत् प्रत्याख्यातम् । पूर्वमते इव अत्रापि मते छाया-नाटकपूर्वं नाट्यसद्भावः स्वीक्रियते । रूपकेषु गद्यपद्यमिश्रणस्य संस्कृतप्राकृतयोश्च प्रयोगस्य का गतिः इति शङ्का च इह मते अमनाहिता तिष्ठति ॥ १०

(ई) वैदिकसम्वादसूक्तजन्यत्वमतम्—जीवात्मनां लौकिकभावनामयत्वं स्पष्टं पिशुनयन्ति अधिपञ्चदश सम्वादसूक्तानि तावद् ऋग्वेदे उपलभ्यन्ते । 'एभिः सूक्तैः धर्मभावनाबहुलानि नाटकीयकौतुकानि प्रतिनिधीयन्ते' इति यत् १८६९ तमे ख्रीष्टाब्दे अध्यापकमैक्समूलरः उट्टङ्कितवान् तदेव तदनन्तरम् अध्यापकप्रवरः लेविमहाशयः अनुमोदितवान् । वान् श्राडर (Von Schroeder) महाशयः पुनः 'सूक्तानि इमानि तानि ५ रहस्य-नाटकानि (Mystery plays) प्रतिनिदधते येषां गर्भरूपप्रचारः भारतीयेषु भारोपीय-कालाद् (Indo-European times) आरभ्य प्रवर्तमानः आसीद्' इति प्रतिपाद्य मतमिदं समर्थितवान् । ततोऽप्यग्रे पदं निदधानः डाक्टरहर्टलस्तु "सुपर्णाध्याये खलु वैदिकनाटकस्य बीजं सुदर्शम्' इति वाचं सहसा उदगिरत् । न पुनस्तावदेतावदेव । भवन्ति इह निखिलतन्त्रस्वतन्त्राः अन्येऽपि विद्वांसः । सत्स्वपि व्याख्यानेषु भिन्नेषु १० ऋग्वेदे कतिपयसम्वादसूक्तप्राप्तौ तेषां मध्याद् एकेषां (यथा सरमापणिसम्वादसूक्तस्य) नाटकयोग्यत्वे च संशयो नास्ति ॥

ननु कथं तर्हि संस्कृतरूपकम् उद्भूतम्? कुत्र नु अस्य उद्भवस्य पूर्वरूपं दृश्यते इति चेत्, श्रूयताम्—

## (क) श्रौतकर्मकाण्डस्य साम्यम् १५

प्रायेण नाट्यस्य सर्वाङ्गानि पुरा श्रौतक्रियाकलापस्य अङ्गत्वेन अविद्यन्त इत्यत्र वक्ष्यमाणानि प्रमाणानि भवन्ति । तथाहि—

(अ) नाट्यस्य नृत्य-गीत-सम्वादेति प्रधानाङ्गानां मध्ये नृत्यस्य उल्लेखाः ऋग्वेदे आम्नायन्ते । उदाहरणार्थं, विवाहसूक्ते वरवध्वोः दीर्घायुष्याय पुरन्ध्रयः नृत्यन्ति । सामवेदस्य गीतसम्बद्धत्वं तु प्रसिद्धम् एव । ऋग्वेदीयसम्वादसूक्तानि च २० कीर्तितपूर्वाणि ॥

(आ) नानाक्रियाबहुलेषु श्रौतानुष्ठानेषु कतिपयानि नाटकीयरूपं नूनं प्रदर्शयन्ति, अथापि न तानि वास्तविकनाटकलक्षणोपेतानि आसन्, यतः धर्मानुष्ठानम् एव तदभिनेतॄणां मुख्यम् उद्देश्यम् आसीद् न तु नाटकम् ॥

(इ) महाव्रताख्ये च श्रौतयागे कुमारीणां वह्निं परितः नर्तनाद् अस्य यागस्य २५ अंशेन नाटकरूपत्वम् अवश्यावधेयम् । विशिष्य तु तत्र 'चर्मार्थं' वैश्यशूद्रयोः मिथः कलहायनं नाटकलक्षणान्वितम् ॥

(ई) हरिवंशपुराणाद् 'यागयज्ञान्तरालावकाशकालेषु तत्र सङ्गतानां यजमानानां होत्रादिपुरोधसां च मनोविनोदार्थं सम्वादसूक्तकथाख्यापनं प्रावर्तिष्ट' इति ज्ञायते ॥ ३०

(उ) यदि च 'महाव्रतादियागेषु अनुष्ठानस्थान् श्रौतक्रियाङ्गाद् गद्यसम्वाद-

नाटकोत्थापकेषु तत्त्वेषु प्रविष्टः' इत्येषा कल्पना उररी क्रियेत, तदा नाटकस्य सर्वाणि अङ्गानि श्रौतकर्माङ्गेषु सन्निहितानि भवन्ति ॥

सर्वाणि तु इमानि नाटकघटकानि तत्त्वानि श्रौतकर्मकाण्डयुगे पुरा पृथक् सव्यापाराणि अभूवन्। तेषां संहननं नाटकात्मभूतस्य च कथावस्तुनः यथायथं विकासश्च तदनन्तरं सम्पेदे। पाठोदीरणं (Recitation) नाम तत्त्वं तु (संस्कृतरूपक-साहित्यं यस्य गौरवं गीतितत्त्वस्य गौरवम् अपि अतिशेते) रामायणमहाभारताभ्यां पश्चात् तत्र प्रविष्टम् ॥

## [ख] रामायणमहाभारतयोः प्रभावः

रामायणे महाभारते च उभयत्र नटः[1] इति नर्तकः इति च शब्दौ पठ्येते। अपि च,

> 'वादयन्ति तथा शान्तिं लासयन्त्यपि चापरे।
> नाटकान्यपरे प्राहुर्हास्यानि विविधानि च' ॥ (२,६६,४)

इत्यादिषु अर्वाचीनेषु रामायणीयपद्येषु नाटकम् इति पदं चापि उपलभ्यते। अन्यच्च बालकाण्डे,

> 'रसैः शृङ्गारकरुणहास्य रौद्रभयानकैः।
> वीरादिभी रसैर्युक्तं काव्यमेतदगायताम् ॥' (१, ४, ६)

इति पद्ये विविधरसोल्लेखः स्पष्टः एव। पुनश्च,

> 'शैलूषाश्च तथा स्त्रीभि र्यान्ति।' (२,८३,१५)

इत्यत्र नटपर्यायवाची शैलूषशब्दोऽपि अधीयते ॥

महाभारते चापि,

> 'इत्यब्रवीत् सूत्रधारस्सूतः पौराणिकस्तथा।' (१,५१,१५)
> 'नाटका विविधाः काव्याः कथाख्यायिककारकाः।' (२,१२,३६)

---

१. (ख्रीष्टपूर्वतुर्यशतक-प्राग्जातेन) पाणिनिनाऽपि नटशब्दः प्रयुज्यते। अस्यार्थः परं सन्दिग्धः। (ख्रीस्तपूर्वद्वितीयशतकभवस्य) पतञ्जलेः साक्ष्यं तु निश्चिततरम्। परोक्ष लिटम् उदाहरता अनेन कंसवध-बलिबन्धौ उदाहृतौ। नाटकद्वयम् इदं तस्य विदितम् आसीद्' इति सम्भाव्यते। एतद्व्यतिरिक्तं शौभिक-ग्रन्थिक-ग्रन्थिकेतिनाटककार्यकर्तृपुरुषत्रैविध्यम् अपि तेन दर्शितम्। तत्र शौभिकाः नाम सामाजिकसमक्षम् अभिनयकर्तारः, ग्रन्थिकाः नाम पटेषु कथाप्रसङ्गचित्रचित्रयितारः, ग्रन्थिकाश्च स्वव्याख्यानैः सामाजिकसमक्षे अभिनीतवस्तुद्योतयितारः। अथ पातञ्जले भाष्ये भ्रुकुंसनाम्नः पात्रविशेषस्यापि उल्लेखः लभ्यो येन प्रसङ्गात् सूचितः स्त्रीपात्राभिनेतृत्वं प्रत्यक्षीयते। तस्मात् केवल पतञ्जलि-साक्ष्येण एव 'ख्रीस्तपूर्वद्वितीयशतके भारतीयं नाटकं पर्याप्तोन्नताम् इव दशाम् गतमासीद्' इति वक्तुं शक्यते ॥

'आनर्ताश्च तथा सर्वे नटनर्तकगायकाः ।' (३;१५,१२)
इत्यादिषु स्थलेषु सूत्रधार-नाटकादिपारिभाषिकशब्दाः प्रयुक्ताः ॥
हरिवंशपुराणे च नाटकविषयकं ज्ञानम् उपलभ्यते ।

अथ संस्कृतरूपकोत्थाने रामायणमहाभारतकथापाठेन यदुपकृतं तदपि खलु दुरपह्नवम् । तथाहि रामायणमहाभारतादिसर्वलोकप्रियकाव्यानां कथापाठाः उत्सवा- ५ वसरेषु मन्दिरेषु मण्डपेषु अनावृतस्थलान्तरेषु च निरन्तरम् अनेकमासान् प्रावर्तन्त । शनैः शनैः कालेन गच्छता संस्कृतभाषा साधारणे पौरजानपदैः यदा दुरवगमा अभवत् तदा भारताः मागधाश्च भाषितभाषापद्यानि प्रयोक्तुम् आरभन्त अन्येकमात्रप्रयुक्तसंस्कृतभाषां च यदि नाम सर्वथा उपेक्षाञ्चक्रिरे । तदेवं क्रमेण निरुक्तकथावाचनावसरेषु यदा संस्कृतभाषायाः पूर्णं पदं भाषितभाषया आक्रान्तम्१० अर्थावयितुः पुरुषस्य च व्यपेक्षा निवृत्ता तदा कथासु वाद्यवादनस्य हावभावानुकूलाङ्गभङ्गीनां च संयोजनं सम्पन्नम् । एवं कृते कथाकार्ये सुतरां मधुरं नाटकाभासं च जातम् । अथ वक्ष्यमाणानि सादृश्यानि इह किमपि सारार्थवन्ति विभान्ति ॥

(अ) (अशंशयं खीष्टसम्वत्सरात् प्राग् उत्कीर्णे) सांचीतः सम्प्राप्ते लेखे नृत्यतां वादयतां, चेष्टाभिः सह गायतां च काथकानां (कथावाचकानां) वर्णनानि१५ उपलभ्यन्ते । सर्वं खल्विदं नाटकीयम् इत्यत्र कः सन्देहः ॥

(आ) रामायणोत्तरकाण्डे कुशलवौ नाम रामस्य अनभिज्ञायमानौ सुतौ रामस्यैव चरितम् अनुगायन्तौ खलु वर्ण्येते ॥

(इ) कथादि वाचकपर्यायवाचिना भरतशब्देन (यस्य आधुनिकः अपभ्रंशः भाट इति ) नाटकेषु वाचनस्य महत्त्वं विस्पष्टं व्यज्यते ॥ २०

(ई) कुशीलवशब्देन च पुनः एतद्वाचनमहत्त्वं समर्थ्यते ॥

(उ) भवभूतेः उत्तररामचरिताच्च ज्ञायते यद् रामायणमहाभारताभ्यां रूपकसाहित्यं भृशम् उपकृतम् इति ॥

*(ऊ) नामनाटकेभ्यश्च तेषां रामायणमहाभारतम् प्रति महद् आधमर्ण्यं स्पष्टं भासते ॥* २५

## [ग] धर्मस्य प्रभावः

प्रथमं नाटकं स्वर्गे धर्मोत्सवावसरे अभिनीतं बभूव किल। नाटकनिर्माणकाले लास्यं ताण्डवं च इति द्विविधं नृत्यम् उमया महेश्वरेण च विभाजितम् । राम-कृष्ण-शिवादिनानादेवनामकिमप्रसङ्गेषु अनुष्ठीयमानैः तैः तैः धर्मकर्मभिः नाटकाभ्युदये महान् उपकारः कृतः । अथ यावा नाटकैः मनोरञ्जनं निषेधन्तः बौद्धाः१० जैनाश्च स्वस्वसाम्प्रदायप्रचाराय नाटकम् औपयिकं मत्वा तत् शरणं ययुः । तदेवम्

सर्वं धर्मभावनया सृष्टायाः तस्याः भावनायाः स्वरूपम् समुन्मीलयति या खलु नाटकस्य जननी धात्री च बभूव ॥

## (घ) लौकिकमनोवृत्तेः प्रभावः

निरुक्तानां श्रौतानुष्ठानानां युगे एव भारते तावद् ग्रामीणोत्सवाः छायानाटकानि पुत्तलिकानृत्यानि च अपि अवश्यं प्राचरन् इति विश्वस्यते । अथ यथा यथा एतेषु ५ सर्वेषु मनोविनोदसाधनेषु जनानाम् अभिरुचिः अवर्धत तथा तथा तत्तत्कर्मजीविनां श्रेण्यः वर्गाश्च अपि अबहुलायन्त इति अवसीयते । एतच्छ्रेणीवर्गजनाश्च न लोकस्य बहुमताः बभूवुः इति तावत् पतञ्जलिसाद्याद् अवगम्यते । एवं निराडम्बरं ग्रामीणेषु अभ्युदिते नाटके यः एष प्राकृतभाषाणां प्रयोगः गद्यपद्यसंयोगः नृत्यगीतयोः विशिष्टः समारोहः रङ्गमञ्चप्रसाधनसामग्रयाश्च अभावः स तावद् नैसर्गिकः एव ॥ १०

ननु यद्येवं तर्हि नाटकसाहित्ये अप्रस्तुतप्रशंसा-रूपकातिशयोक्तितुल्याभिः सरणिभिः क्वचित् २ यत् कथावस्तुसमर्पणं दृश्यते तत् कथम् इति चेत् , यदि नाम सामान्यशिक्षां आचारशिक्षां च उद्दिश्य कृतेभ्यः बौद्धजैनानां शासनेभ्य इति तर्कयामः । पक्षान्तरे राजादीन् नायकादीन् प्रकल्प्य राजान्तःपुरेषु सभविनीः प्रणयकथाश्च विषयीकृत्य नाटकरचनाप्रवृत्तिः कुतः जाता इति जिज्ञासायां, चिराय १५ नाटककाराणां राजादिकृपाच्छायायां सानन्दं जीवनाद् इति उत्पश्यामः ॥

ग्रीकरूपकात् संस्कृतरूपकम् उत्पन्नम् इत्येवंभूतो यः विचारः तत्र स्वल्पः खलु तथ्यांशः विभाति[1] ॥

अथ उक्तार्थम् उपसंहरन् ब्रूमः यद् नैकशताब्दीः गर्भरूपेण स्थित्वा संस्कृतरूपकं जन्म लब्धवत् । सजीवशरीरवत् चिराय एतदङ्गोपचितिपरिपुष्टी अभवताम् ; यदपि २० अनुकूलम् उपलब्धं तदेव अनेन स्वाङ्गीकृतम् अथापि स्वव्यक्तित्वरूपं अविलुप्तं रक्षितम् । अत्र उक्तं च डाक्टरबेल्वाल्करमहाशयेन "न खलु कश्चिदपि वादः संस्कृतरूपकोत्पत्तौ प्रयोजकतां गतानां जटिलतत्त्वानां विनिश्चयनाय तावदलम् । कदाचित् तेषु एकं, कदाचिद् अपरं च लक्ष्यीकृत्य यः प्रातिभः सङ्ग्रामः प्रवर्तते तेन विषयोऽयं दुरूहाद् दुरूहतरः सञ्जायते । किं वाऽयद् इत्थं गतायाम् अवस्थायां २५ प्रत्याशासनीयं स्यात् । लोकानुकृतिः हि नाटकस्य परमम् उद्देश्यम् , अथ स्वयं लोकस्य (जीवनस्य) विश्लेषणम् इव नाटकस्य अपि विश्लेषणम् अनीप्सितं यदि स्यात् तर्हि किमाश्चर्यम् ।" इति ॥

१. अत्र विवेच्य तु ७५ तमे पृष्ठे युक्तिपरीक्षा कृता ॥

# (७५) ग्रीकरूपकात् संस्कृतरूपकोत्पत्तिः

अथ केचित् कल्पयन्ति यद् अलक्षेन्द्रेण सिन्धुकच्छे पञ्चापदेशे च आक्रान्ते यवनाः (Greeks) भारतसमुद्रतटे काँश्चिद् उपनिवेशान् विरच्य तत्र वासं चक्रुः। तेषां भारतागमनात् प्रागेव तेषु नाटकस्य प्रचरितत्वाच्च एषु उपनिवेशवासदिवसेषु नाटकेन एतावदर्थं तेषां मनोविनोदनेन भवितव्यम्। संस्कृतरूपकस्य च तावद् अनु- ५
दयात् तेषां रूपकादेव नूनं संस्कृतरूपकस्य उदयनम् उत्थानं च नासम्भाव्यं यतः तेषां तत्तत्साहित्यं ज्ञात्वा संस्कृते क्रमेण गणित-फलितज्योतिषं गणितादि च प्रसृतम् इति सर्वेषां सम्मतम् एव। तस्माद् यवननाटकात् संस्कृतनाटकोत्पत्तिः सिद्धा इति। संस्कृतनाटकयवननाटकयोः साम्यानि उद्भाव्य च वैबर (Weber)–विंडिश (Windisch) महाशयाभ्यां प्रयत्नेन मतमेतत् समर्थितम्। संस्कृतनाटकेषु प्रयुज्य-१०
मानौ यवनी-यवनिकाशब्दौ च प्रकरणेऽत्र दिग्दर्शकत्वेन महत्त्वशालिनौ अभिमतौ॥

एतत्तु अत्र विभाव्यम्। संस्कृतनाटकेषु यवन्यः (यवनकुमार्यः) यथा राज्ञाम् अङ्गरक्षिकाः विलोक्यन्ते न तथा यवननाटकेषु। किंच यवनिकाशब्देन 'विदेशीय-द्रव्यनिर्मिताः, सम्भवतः पारसीकपटविरचिताः खलु भारतीयनाटकपटिकाः अभू-वन्' इति विज्ञायते इति तावद् लेवि (Levi) महाशयः सम्भावयति। ग्रीकनाटकेषु१५
च पटीप्रयोगादर्शनं संस्कृतयवननाटकयोः वैषम्यं सूचयद् ग्रीकरूपकात् संस्कृतरूपको-त्पत्तिवादं निरासयति। कथावस्तुशरीरं व्याप्य स्थितस्य नाटकात्मनः स्वरूपे कथा-वस्तु-संस्थापने नाटकनिर्माणसिद्धान्ते च संस्कृतग्रीकनाटकयोः परस्परम् आकाश-पातालयोः अन्तर-दर्शनादपि पक्षोऽयं दुर्धरः। तथाहि—

(अ) ग्रीकनाटकेषु देशैक्यं कालैक्यं च अनुस्रियते न संस्कृतनाटकेषु।२०
अभिज्ञानशाकुन्तले हि एकस्य अङ्कस्य देशः तपोवनं यदस्ति तर्हि अपरस्य राजभवनं, पुनश्च एकस्य पृथिवी अपरस्य च दिवम्। अभिज्ञानशाकुन्तले एव पुनः एकस्मिन् एव चरमे अङ्के स्वर्गमर्त्यलोकयोरपि घटनादेशभेदः दृश्यते। एवं च शकुन्तलायाम् अन्तर्वत्न्याम् इत्यादिप्रसङ्गे च प्रथमचतुर्थाङ्कयोः कथाकालाः परस्परम् अनेकवर्षभिन्नाः॥ २५

(आ) संस्कृतनाटकेषु करुणहास्यरसमिश्रः यावत्कालावद् यो मधुरो रस आस्वाद्यते ग्रीकनाटकेषु तद्योगो निषिद्धः। अपि च[1] विषये संस्कृतनाटकानि स्पेन-भाषानाटकैः आङ्ग्लभाषानाटकैश्च अधिकतरं साम्यं बिभ्रति। "एतद्भाषाद्वयनाटकेषु

---

१. इमे चात्र संस्कृतनाटकानां शेक्सपियरनाटकैः सह साधर्म्यसम्बन्धाः दर्शनीयाः—

(क) संस्कृतनाटकेषु यथा विदूषकः शेक्सपियरनाटकेषु तथा भाण्डः (Clown, fool)॥

(ख) [illegible] ॥

(ग) [illegible] ॥

हि ट्रैजिडि'कामेडि' (Comedy) शब्दयोः योऽर्थः गृह्यते प्राचीनैः (ग्रीकैः) तद्भिन्नः अर्थः खल्वत्रगृह्यते ।"[3] संस्कृतनाटकानि "गभीरचिन्ता-शोकाभ्यां सार्द्धं हासविनोद-वृत्ती संयोज्य"[4] एतेन मिश्रितरसजातेन विरच्यन्ते । यद्यपि संस्कृतनाटकानि सकल-मानवीयमनोभावान्—भयशोककरुणाश्चापि यदन्तर्गताः भवन्ति-उद्दीपयन्ति, अथापि तानि जातुचिद् दुःखान्तानि न भवन्ति । 'दुःखान्तत्वं च शेक्सपियरकाले ट्रैजिडि ५ नाटकस्य मुख्यं लक्षणं खल्वासीद्' इति जान्सनः (Johnson) आह स्म ॥

(इ) ग्रीकैः मनुष्यजीवनाद् भोगाहङ्काराख्ये द्वे तत्त्वे उपादाय स्वकाव्यस्य प्राणप्रतिष्ठा कृता आसीत् । संस्कृतनाटककाराणां दृष्टिस्तु मानवजीवनस्य केवलं शान्त्यात्मतृप्तिसिक्ते पार्श्वे पतिता । तस्माद् न भारतीयकरुणनाटकेषु मनुष्यजीव-नस्य अधिककरुणं न च भारतीयशृङ्गारनाटकेषु मनुष्यजीवनस्य अधिकप्रसन्नं१० स्वरूपं लब्धावकाशं दृश्यते ॥

(ई) ग्रीकनाटकप्रचरितं मण्डलीगानं संस्कृते अप्रतीतम् ॥

(उ) आकारे च भाषाद्वयनाटकयोः भेदः दृश्यते । मृच्छकटिकाकारः ईस-फाईलस (Aeschylus)-कृतेषु नाटकेषु कस्यचिदपि आकारस्य न्यूनान्यूनः त्रिगुणः खल्वस्ति । अथ एकस्मिन् खेलाकाले यवनाः ट्रैजिडि-त्रयं प्रहसनं चैकम् अभ्यनयन्,१५ भारतीयाः पुनः केवलं ह्येकं नाटकम् ॥

(ऊ) संस्कृतनाटकं कमनीयकल्पनाकोमलं भवति न च ग्रीकनाटकम् ॥

अथ स्वरूपेण संस्कृतनाटकं महाजटिलं खलु भवति । साहित्यदर्पणे अस्य प्रथमं रूपकम् उपरूपकं चेति विधाद्वयम् उक्त्वा आद्यस्य पुनः दश द्वितीयस्य च अष्टादश भेदाः आख्याताः । संस्कृतनाटकस्य 'भाषान्तरनाटकलक्षणाऽसामान्यानि२० विशिष्टान्येव लक्षणानि' दृश्यन्ते । तद् एतैः हेतुभिः भारतीयरूपकं भारतेतरन्मः

(घ) उभयत्र रम्यकल्पनाप्रसूतयोरार्थानां संयोजनं दृश्यते ॥

(ङ) उभयत्र रञ्जनः श्लेषस्य वक्रोक्त्यादेश्च प्रयोगः लभ्यते ॥

(च) उभयत्र च पत्रलेखन-मृतोन्मीलन-नाटकान्तर्नाटकान्तरप्रवेशनप्रभृतिभिः समानैः उपायैः कथावस्तुप्रसारः क्रियते ॥

उक्तं च अत्र मैकडानलेन 'अन्योन्योपकारे यस्तुतः अत्यन्तासम्भवे एतादृशी तु सादृश्यसम्बन्धपरम्परा परस्परनिरपेक्षवस्तु द्वयाभ्युत्थानस्य शिक्षाप्रदं निदर्शनं भवति ।' इति ॥

१. दुःखान्तं नाटकम् ॥

२. सुखान्तं नाटकम् ॥

३. श्लेजल (Schlegel)-मतमिदम् ॥

४. यथा, नायकनायिकयोः विपाकावसरे विदूषककार्यं गौरवापन्नं खलु भवति ॥

५. इमानि ७६ तमे खण्डे वर्णितानि ॥

वृक्षः नूनं, न तु देशान्तरजातभूरुहस्य भारतभुवि प्ररूढं शाखामात्रम्' इति अवसीयते। उक्तं च अत्र हारविट्ज (Horrwitz)-महाशयेन—'लीपजिगनगरे वेमरनगरे च प्रेक्षामन्दिराणां निर्माणात् चिरपूर्वं पेकिङ्गनगरे तेषां प्राप्तेः जर्मननाटकं चीननाटकाद् उत्थितम् इति अस्मासु को ब्रूयात्। भारतीयनाटकपक्षे तर्हि विरुद्धतर्कः कथं क्रियते? यदि चीनदेशे ग्रीसदेशे च अन्योन्यनिरपेक्षं स्वतन्त्रतया रूपकसाहित्यम् ५ उद्भूत् तर्हि भारतेऽपि तत् तथैव।" इति ॥

## ७६ संस्कृतरूपकस्वरूपम्

दुःखान्तत्वस्य सर्वथा अभावः[1], कालैक्यनियमाभावः, देशैक्यनियमाभावः, सुख-दुःखभावानां मनोरमं विमिश्रणं, ग्रीकनाटकापेक्षया बृहत्तरकायत्वं कल्पनाबहुलत्वं चेति संस्कृतरूपकस्वरूपघटकतत्त्वानि तु उक्तचराणि। अथ कानिचिदपराणि १० अधस्ताद् निरूप्यन्ते—

(अ) वर्णनकारिणः गद्यस्य सङ्गीत (Lyrical) पद्यैः सह संयोजनम्। संस्कृतरूपकेषु वस्तुवर्णनं तावत् सामान्यतया गद्येनैव विधीयते, तच्च बहुशः सरलं खलु भवति। रसोत्कर्षस्तु तत्तदवसरानुरूपैः सङ्गीतानन्दसहोदरम् आनन्दं जनयद्भिः पद्यैः परम् आधीयते। वस्तुतस्तु एभिः पद्यैरेव संस्कृतनाटकेभ्यः सहृदयहृदयावर्जकं १५ किमपि कामनीयकं समर्प्यते। तेषु असत्सु हि शुष्कसम्वादमात्रवत् तानि स्युः। केवले शाकुन्तले उपद्विशतं पद्यानि प्राप्यन्ते। प्रायेण नाटकशरीरस्य अर्द्धाङ्गं तद्गतानि पद्यानि भवन्ति। छन्दांसि च एषु विविधानि प्रयुज्यन्ते। कर्तुः कृतित्वस्य प्रमाणविशेषाः खलु इमानि जायन्ते ॥

(आ) संस्कृतेन सह नाना प्राकृतानां सम्मिश्रणम्। २०

संस्कृतनाटकेषु स्वस्वसामाजिक स्थित्यनुरूपाः नानापात्राणां नाना भाषाः भवन्ति। नायकानां नृपाणां महाकुलप्रसूतानां तपस्विनीनां च भाषया नियमेन संस्कृतेन भवितव्यम्। जात्या ब्राह्मणोऽपि विदूषकः प्राकृतं प्रयुङ्क्ते। कुलीनाः स्त्रियः बालकाः उच्चवर्गस्थाः सेवकाश्च सामान्यतया गद्यावसरेषु शौरसेनीं पद्यप्रस्तावेषु च माहाराष्ट्रीं भाषन्ते। राजभवनसेविनः अन्ये भृतकाः कामचारेण मागधीं प्रयोक्तुम् २५ अर्हन्ति। गोप-चौर-किरातादयोऽन्ये जनाः आभीरी-पैशाच्यावन्तीप्रभृतीनि प्राकृतान्तराणि ब्रुवन्ति। पञ्चमवर्णजनाः वनेचराश्च अपभ्रंशभाषया व्यवहरन्ति ॥

---

१. संस्कृतनाटकेषु मरणनाटनं निषिद्धम्। अवसाने च तेषाम् अवश्यं सुखमयं स्याद् इति यः नाट्यशास्त्रनियमः स सर्वत्र पाल्यते। एतन्नियमपरतन्त्रैः एव भवभूत्यादिभिः सीतारामादीनां वियोगानन्तरं पुनर्योगः निबद्धः। नाटकोपसंहारे करुणरसे अनिबध्यमानेऽपि अन्तरा अन्तरा महाकवीनाम् अपि कृतिषु अयं रतिशोकादिभावैः पुरःसरत्वेन वर्णनीयत्वमानीतः दृश्यते। मृच्छकटिकशाकुन्तलयोः एव नाटकमध्ये उत्तररामचरिते च भावितः पावकस्त्, विनिमय च भावो, अनुभूयते ॥

हि ट्रेजिडि[1]कामेडि[2] (Comedy) शब्दयोः योऽर्थः गृह्यते प्राचीनैः (ग्रीकैः) तद्भिन्नः अर्थः खलु गृह्यत ।"[3] संस्कृतनाटकानि "गभीरचिन्ता-शोकाभ्यां सार्द्धं हासविनोदवृत्ती संयोज्य"[4] एतेन मिश्रितरसजातेन विरच्यन्ते । यद्यपि संस्कृतनाटकानि सकलमानवीयमनोभावान्—भयशोककरुणाश्चापि यदन्तर्गताः भवन्ति—उद्दीपयन्ति, अथापि तानि जातुचिद् दुःखान्तानि न भवन्ति । 'दुःखान्तत्वं च शेक्सपियरकाले ट्रेजिडि नाटकस्य मुख्यं लक्षणं खल्वासीद्' इति जान्सनः (Johnson) आह स्म ॥

(इ) ग्रीकैः मनुष्यजीवनाद् भोगाहङ्काराख्ये द्वे तत्त्वे उपादाय स्वकाव्यस्य प्राणप्रतिष्ठा कृता आसीत् । संस्कृतनाटककाराणां दृष्टिस्तु मानवजीवनस्य केवले शान्त्यात्मतृप्तिसिक्ते पार्श्वे पतिता । तस्माद् न भारतीयकरुणनाटकेषु मनुष्यजीवनस्य अधिककरुणं न च भारतीयशृङ्गारनाटकेषु मनुष्यजीवनस्य अधिकप्रसन्नं स्वरूपं लब्धावकाशं दृश्यते ॥

(ई) ग्रीकनाटकप्रचरितं मण्डलीगानं संस्कृते अप्रतीतम् ॥

(उ) आकारे च भाषाद्वयनाटकयोः भेदः दृश्यते । मृच्छकटिकाकारः ईसफाईलस (Aeschylus)-कृतेषु नाटकेषु कस्यचिदपि आकारस्य न्यूनान्न्यूनः त्रिगुणः खल्वस्ति । अथ एकस्मिन् खेलाकाले यवनाः ट्रेजिडि-त्रयं प्रहसनं चैकम् अभ्यनयन्, भारतीयाः पुनः केवलं ह्येकं नाटकम् ॥

(ऊ) संस्कृतनाटकं कमनीयकल्पनाकोमलं भवति न च ग्रीकनाटकम् ॥

अथ स्वरूपेण संस्कृतनाटकं महाजटिलं खलु भवति । साहित्यदर्पणे अस्य प्रथमं रूपकम् उपरूपकं चेति विधाद्वयम् उक्त्वा आद्यस्य पुनः दश द्वितीयस्य च अष्टादश भेदाः आख्याताः । संस्कृतनाटकस्य 'भाषान्तरनाटकलक्षणाऽसामान्यानि विशिष्टान्येव लक्षणानि'[5] दृश्यन्ते । तद् एतैः हेतुभिः भारतीयरूपकं भारतेतरन्मः

---

(घ) उभयत्र रम्यकल्पनाप्रसूतयोरार्थानां संयोजनं दृश्यते ॥

(ङ) उभयत्र रञ्जनः श्लेषस्य वक्रोक्त्यादेश्च प्रयोगः लभ्यते ॥

(च) उभयत्र च पत्रलेखन-मृतोज्जीवन-नाटकान्तर्नाटकान्तःप्रवेशनप्रभृतिभिः समानैः उपायैः कथावस्तुप्रसारः क्रियते ॥

उक्तं च अत्र मैकडानलेन 'अन्योन्योपकारे यस्तुतः असम्भवे एतावुभौ तु सादृश्यसम्बन्धपरम्परा परस्परनिरपेक्षवस्तु द्वयाभ्युत्थानस्य निशाम्यं निदर्शनं भवति ।' इति ॥

१. दुःखान्तं नाटकम् ॥

२. सुखान्तं नाटकम् ॥

३. श्लेगेल (Schlegel)-मतमिदम् ॥

४. यथा, नायकनायिकयोः विवाहावसरे विदूषकस्यापि गौरवास्पदं खलु भवति ॥

५. इमानि ७६ तमे खण्डे वर्णितानि ॥

वृत्तः नूनं, न तु देशान्तरजातभूरुहस्य भारतभुवि प्ररूढं शाखामात्रम्' इति अवसीयते । उक्तं च अत्र हारविट्ज (Horrwitz)-महाशयेन—'तीरथिंगनगरे चेमरनगरे च प्रेक्षामन्दिराणां निर्माणात् चिरपूर्वं पेकिङ्गनगरे तेषां प्राप्तेः जर्मननाटकं चीननाटकाद् उद्धृतम् इति अस्मासु को ब्रूयात् । भारतीयनाटकपक्षे तर्हि विरुद्धतर्कः कथं क्रियते ? यदि चीनदेशे ग्रीसदेशे च अन्योन्यनिरपेक्षं स्वतन्त्रतया रूपकसाहित्यम् ५ उद्भूतं तर्हि भारतेऽपि तत् तथैव ।" इति ॥

## ७६ संस्कृतरूपकस्वरूपम्

दुःखान्तत्वस्य सर्वथा अभावः[1], कालैक्यनियमाभावः, देशैक्यनियमाभावः, सुख-दुःखभावानां मनोरमं विमिश्रणं, ग्रीकनाटकापेक्षया बृहत्तरकायत्वं कल्पनाबहुलत्वं चेति संस्कृतरूपकस्वरूपघटकतत्त्वानि तु उक्तचराणि । अथ कानिचिदपराणि १० अधस्ताद् निरूप्यन्ते—

(अ) वर्णनकारिणः गद्यस्य सङ्गीत (Lyrical) पद्यैः सह संयोजनम् ।

संस्कृतरूपकेषु वस्तुवर्णनं तावत् सामान्यतया गद्येनैव विधीयते, तच्च बहुशः सरलं खलु भवति । रसोत्कर्षस्तु तत्तदवसरानुरूपैः सङ्गीतानन्दसहोदरम् आनन्दं जनयद्भिः पद्यैः परम् आधीयते । वस्तुतस्तु एभिः पद्यैरेव संस्कृतनाटकेभ्यः सहृदयहृदयावर्जकं १५ किमपि कामनीयकं समर्प्यते । तेषु असत्सु हि शुष्कसम्वादमात्रवत् तानि स्युः । केवले शाकुन्तले उपद्विशतं पद्यानि प्राप्यन्ते । प्रायेण नाटकशरीरस्य अर्धाङ्गं तद्गतानि पद्यानि भवन्ति । छन्दांसि च एषु विविधानि प्रयुज्यन्ते । कर्तुः कृतित्वस्य प्रमाणविशेषाः खलु इमानि जायन्ते ॥

(आ) संस्कृतेन सह नाना प्राकृतानां सम्मिश्रणम् । २०

संस्कृतनाटकेषु स्वस्वसामाजिकस्थित्यनुरूपाः नानापात्राणां नाना भाषाः भवन्ति । नायकानां नृपाणां महाकुलप्रसूतानां तपस्विनीनां च भाषया नियमेन संस्कृतेन भवितव्यम् । जात्या ब्राह्मणोऽपि विदूषकः प्राकृतं प्रयुङ्क्ते । कुलीनाः स्त्रियः बालकाः, उच्चवर्गस्थाः सेवकाश्च सामान्यतया गद्यावसरेषु शौरसेनीं पद्यप्रस्तावेषु च माहाराष्ट्रीं भाषन्ते । राजभवनसेविनः अन्ये भृतकाः कामचारेण मागधीं प्रयोक्तुम् २५ अर्हन्ति । गोप-चीर-किरातादयोऽन्ये जनाः आभीरी-पैशाच्यावन्तीप्रमुखानि प्राकृतान्तराणि ब्रुवन्ति । पञ्चवर्णजनाः वनेचराश्च अपभ्रंशभाषया व्यवहरन्ति ॥

---

1. संस्कृतनाटकेषु मरणनाटनं निषिद्धम् । अवसानं च तेषाम् अवश्यं सुखमयं स्याद् इति यः नाट्यशास्त्रनियमः स सर्वत्र पाल्यते । एतन्नियमपरतन्त्रैः एव भवभूत्यादिभिः सीतारामयोः वियोगानन्तरं पुनर्योगः निबद्धः । नाटकोपसंहारे करुणरसे अनिबध्यमानेऽपि अन्तरा अन्तरा महाकवीनाम् अपि कृतिषु अयं रतिशोकादिभावैः पुरुषपक्षेण चर्वणोत्कर्षमानीतः श्रूयते । मृच्छकटिकशाकुन्तलयोः एष नाटकमध्ये उत्तररामचरिते च आदितः पर्यन्तं, विशिष्य च भावो, अनुभूयते ॥

(ए) मुख्यम् उद्देश्यम् ।

संस्कृतनाटकानां मुख्यम् उद्देश्यं सामाजिकानां हृदयेषु शृङ्गार-वीर-करुणादीनां मध्याद् मुख्यैकरसचर्वणाऽर्पणं[1] खलु अस्ति । कथावस्तु, चरित्रचित्रणं, सर्वं चान्यत् केवलस्य अस्यैव अङ्गिनः अङ्गानि सञ्जायन्ते । संस्कृतनाटकेषु क्रियावेगाय[2] शास्त्रैः प्राधान्यस्य अप्रदानात् तेषां बहुतराणि आधुनिकैः समीक्षकैः नाटकीयकाव्य- ५ त्वेन अङ्गीक्रियन्ते न तु वास्तविकनाटकत्वेन ॥

(ई) विषयाः ।

प्रसिद्धवृत्तान्तविषयाणि एव नाटकानि सामाजिकैः सुखेन अवबोद्धुं शक्यानि इति 'इतिहास प्रसिद्धम् एव किमपि वृत्तं वा उपाख्यानं वा तद्विषयः स्याद्' इति नियमो वर्तते । कतिपयनाटकानि वर्जयित्वा[3] प्रायः सर्वेषां नाटकानां कथावस्तुनः१० रामणीयके प्रणयकथायाः शृङ्गाररसस्य च प्राधान्यम् अवलोक्यते । प्रथमदर्शनादेव अन्योन्यानुरागपरवशौ नायकौ (नायिका च नायकश्च) वियोगम् अभिलाप-नैराश्य संशय-प्रत्यूह-प्रत्याशाद्युपजातमनोव्यथाश्च अनुभूय आजीवनस्थायिनः संयोगस्य सुखम् अनुभवतः । मध्ये यत्र तत्र विदूषकेण नायिकासखीभिश्च हासरसः समुत्पाद्यते ॥ १५

(उ) संस्कृतरूपकं नान्दीसंज्ञकेन मङ्गलाचरणपद्येन उपक्षिप्यते। ततःप्रस्तावना प्रस्तूयते यत्र स्वस्य भार्यया वा पारिपार्श्वकेण वा अनुगम्यमानः सूत्रधारः मञ्चम् आगत्य प्रयोक्ष्यमाणस्य रूपकस्य नामादि सामाजिकानां पुरस्तात् कीर्तयित्वा ततः सर्वप्रथमं प्रविशत् पात्रं च पिशुनयित्वा निष्क्रामति । रूपकस्य ये दश भेदाः अष्टादश उपभेदाः निर्दिष्टाः तेषु प्रतिभेदं भिद्यमाना अङ्कसङ्ख्या एकतः दशपर्यन्ता भवति२० (यथा, नाटिकायां चत्वारः प्रहसने च सामान्यतया एकः अङ्कः भवति) । एकाङ्कसमाप्तौ अपराङ्कारम्भे प्रवेशक-विष्कम्भकादिसंज्ञाः अङ्कोत्थानिकाः भवन्ति यत्र सामाजिकपरोक्षं वृत्तानि तानि वृत्तानि निर्दिश्यन्ते येषां ज्ञानाद् ऋते सामाजिकाः अग्रेतनीं वार्तां बोद्धुं न क्षमन्ते । दिव्यानि अदिव्यानि दिव्यादिव्यानि इति त्रिविधानि अपि पात्राणि भवन्ति सङ्ख्यानियमश्च तेषां कश्चिन्नास्ति । नाटकावसाने२५ भरतवाक्यं (राष्ट्रीयप्रार्थनात्मकम्) आवश्यकं तच्च प्रधानपात्राणाम् अन्यतमेन, प्रायेण तु स्वयं नायकेनैव पठनीयम् ।

(ऊ) नाट्यशाला ।

नाट्यशास्त्रप्रोक्तनियमेन नाट्यशाला वर्गाकृतिः आयताकृतिः त्रिकोणाकृति र्वा

---

१. व्यवहारे तु शृंगारस्यैव प्राधान्यं दृश्यते । तदनन्तरमेव स्थानं वीरस्य । उत्तररामचरिते भवभूतिः करुणं पर्यपोषयत् । रसान्तराणि तु केवलं यत्र तत्र सहकारितयैव अभिमानीयन्ते, प्राधान्यम् तेषां क्वाचित्कं मन्यते ॥

२. क्रियावेगो नाम एतत् Action इति आंग्लभाषायां प्रसिद्धः ॥

३. यथा, विशाखदत्तकृत मुद्राराक्षसं, महावीरचरित वेणीसंहार प्रबोधचन्द्रोदय नागानन्दं च ॥

भवति । नाटकप्रयोगकालाश्च नाट्यशास्त्रे वासन्तिकाः उत्सवदिवसाः, राजाभिषेकदिवसाः, साधारणजनमाननीयानि मेलनानि (Fairs), धर्मोत्सवाः, विवाहावसराः, पुत्रजन्मक्षणाः, इष्टजनसमागमदिष्टाः, गृहस्य नगरस्य वा प्रथमाधिकारप्राप्तिदिवसाश्चेति दर्शिताः । नाटकानि च प्रायेण सङ्गीतशालासु अभ्यनीयन्त । यवनिका नेपथ्यमञ्चयोः व्यवधायिनी अभवत् । त्वरया प्रविविक्षु पात्रं पटीम् उत्क्षिप्य प्रविशति स्म । मञ्चस्य प्रकृतिचित्रप्रसाधनम् अलङ्करणं च अतिमात्रसामान्यम् आसीत् । बहवश्चार्थाः सामाजिकेभ्यः वर्णनात्मकैः पद्यैः वस्त्वनुकृतिभिः नाट्येन वा न्यवेद्यन्त । तच्चेदं सर्वं सामाजिकाः सम्यग् अवगच्छन्ति स्म ॥

### (ञ) प्रयोजनम् ।

संस्कृतनाटककाराणां तत्करणे प्रधानं प्रयोजनं तावद् लोकरञ्जनं प्रतिभाति न तु यथादृष्टस्य मनुष्यजीवनस्य शब्दैः निबन्धनम् । तेन यदि हि दुःखान्तं नाटकं स्यात् तर्हि शोकपरिप्लुतमानसाः सन्तः दर्शकाः प्रेक्षामन्दिरेभ्यः स्वमन्दिराणि प्रत्यावर्तेरन् । एवं च नाटकस्य मुख्यं प्रयोजनम् एव प्रतिहन्येत । तस्मान्न दुःखान्तं संस्कृतनाटकं क्रियते । अथ च, प्रेत्यभावसिद्धान्तम् अभ्युपगच्छतां भारतीयानां (मते) मरणं तथा शोकप्रयोजकं नास्ति यथा यूरोपीयानां (मते) । 'दुःखान्तम् अपि संस्कृतनाटकं भवति यथा ऊरुभङ्गम्' इति चेद्, 'ईदृशेषु नाटकेषु अपि मृत्युं गच्छन्तः दुःशासनादयः दर्शकप्रीतिपात्राणि नहि भवन्ति, दर्शकाः पुनः तन्मरणं निवर्ण्य हृष्यन्ति' इति अभियुक्ताः मन्यन्ते । सैद्धान्तिकानां (मते) पुनः मरणनाटनात् पूर्वं वा उत्तरं वा अतिशयेन अनुभूयमानः करुणरसः खलु नाटकस्य 'ट्रेजिडि' संज्ञाप्रयोजकं भवति न तु केवलं हृदयकम्पनस्य मरणस्य नाटनम् एव । तथाविधं करुणरसं धारयितुम् एव तु न संस्कृतनाटकेषु प्रत्यक्षं मरणम् अभिनीयते ॥

### (ट) वर्जिताभिनयार्थाः ।

न केवलं 'मृत्युः अनभिनेयः' इत्येतावदेव तावत् । अभिशपनं, निर्वासनम्, ईतिः, दंशनं, चुम्बनम्, अभ्यवहरणं, शयनम्, अन्यच्चापि यत्किञ्चिद् गम्भीरागम्भीरप्रकृतिकं शिष्टाऽसम्मतं वाऽस्ति न तत् सर्वं संस्कृतरङ्गमञ्चे अङ्कितं भवति ॥

## (७७) कतिपयानि महान्ति रूपकाणि

मुद्रितानाम् अमुद्रितानां च संस्कृतरूपकाणां सङ्ख्या पारेषट्शतं सत्यपि अत्र वर्णनीयानां तेषां गणना अतिहस्ताङ्गुलीपर्वं न भवति । तृतीयाध्याये वर्णितानि भास-कालिदासाऽश्वघोषनाटकानि व्यतिरिच्य इमानि तावन्महान्ति नाटकानि अवशिष्यन्ते—

(क) शूद्रकस्य मृच्छकटिकम् ।

(ख) श्रीहर्षनाम्ना प्रसिद्धा रत्नावली, प्रियदर्शिका, नागानन्दं चेति रूपकत्रयी।

(ग) विशाखदत्तस्य मुद्राराक्षसम्।

(घ) भट्टनारायणस्य वेणीसंहारम्।

(ङ) भवभूतेः मालतीमाधवं महावीरचरितम् उत्तररामचरितं च। ५

(च) राजशेखरस्य बालभारतादीनि।

(छ) दिङ्नागस्य कुन्दमाला।

(ज) मुरारेः अनर्घराघवम्।

(झ) कृष्णमिश्रस्य च प्रबोधचन्द्रोदयः॥

## ७८ शूद्रकः

१०

महद् यशः खलु शूद्रकस्य संस्कृते श्रूयते। तथाहि वेतालपञ्चविंशतिकायां, दण्डिनः दशकुमारचरिते, बाणस्य हर्षचरिते कादम्बर्यां च, सोमदेवस्य कथासरित्सागरे च अस्य नामधेयं कीर्त्यते। कह्लणेन च 'आनुपूर्व्या नृपविक्रमादित्याद् नृपान्तरान्तरशून्यः पूर्वः शूद्रकः' इत्युक्तम्। नानाकवयश्च नानाग्रन्थेषु[1] अस्य चरितं न्यबध्नन्। मृच्छकटिकप्रस्तावनायां च तदीयः कियानपि यो जीवनोदन्तः उपन्यस्तः १५ तेन ज्ञायते यद् असौ वेदेषु महाधीतो, गणितपण्डितः, कलारसिकः साङ्ग्रामिकगुणोपेतश्च बभूव। दुश्चरेण तपसा प्रसाद्य तेन शिवाद् वरा प्राप्यन्त। उपाख्यानेषु च तस्य पराक्रमविजयकर्माणि बहुधा प्रसिद्धानि॥

### वर्ण्यार्थः

दशाङ्कनिबद्धं मृच्छकटिकं रूपकभेदेषु प्रकरणम् इत्युच्यते। अत्र कविना२० वात्स्यायनीयकामसूत्रोक्तदिशा नागरकाऽऽदर्शीभूतस्य चारुदत्तस्य महाधनवत्या गणिकायाः वसन्तसेनायाश्च परस्परप्रणयकथा विषयीकृता। गुणसमृद्धिमान् चारुदत्तः महावदान्यतया दौर्गत्यम् आपन्नोऽपि धर्माद् न परिभ्रष्टः। वसन्तसेना तु या वेश्याकुले प्रसूता नृत्यगीतकलासु च महानिपुणा आसीत्, तस्य गुणानां हेतोः तस्मिन् भृशम् अनुरक्ता। चारुदत्तस्य संयतात्मत्वात् कुलमानित्वाच्च पूर्वम् अनु २५ रागप्रकाशनं प्रायेण वसन्तसेनयैव कृतम्। तदानीं महीं पालयन् उज्जयिनीनाथस्य

---

१. तेषाम् इमे अत्र उल्लेखमर्हन्ति—

(क) काव्यादर्शोपरि लिखितायां स्वटीकायां वादिघङ्घालेन उल्लिखितं शूद्रकचरितम्॥

(ख) राजशेखरेण उल्लिखिता रामिलसौमिलाभ्यां कृता शूद्रककथा॥

(ग) भोजेन कीर्तितनामधेया पञ्चशिखप्रणीता प्राकृतभाषाबद्धा शूद्रककथा॥

(घ) भोजेन अभिनवगुप्तेन च अनुस्मृतं विक्रान्तशूद्रकं नाम नाटकम्॥

महाराज पालकस्य श्यालेन शकारेण अनुरागं प्रार्थ्यमाना अपि सा तस्मिन् अननुरक्ता सती तत्कोपभाजनम् अजायत। निर्व्याजा निर्हेतुका च खलु चारुदत्ते तस्याः प्रीतिः बभूव इति विटस्यैव 'वेश्यामवेशसदृशप्रणयोपचाराम्' (८,२३) इतिवाक्येन स्पष्टम्। शकारस्य 'रदं तं दलिद्दसार्थवाहमभिसारयसि' इति उपालम्भवचनं सा स्वगौरवायैव अमन्यत। क्रूरः कापुरुषश्च शकारः एकदा ताम् उद्याने असहायाम् ५ आसाद्य निर्दयं ताडयति, मूर्छितां च तां मृता इति मत्वा तत्रैव विहाय निर्गच्छति, ततः तन्मारणापराधं च न्यायालये चारुदत्तस्य घोषयति। या वसन्तसेना चारुदत्तस्य प्राणेभ्योऽपि प्रियतराऽभूत् तस्याः एव व्यापादनापराधतः स घुष्येत इति तस्य विषादस्य किमु वक्तव्यम्। न्यायालये सर्वमग्रत वसन्तसेनया सह सम्बन्धं पृष्टः असौ समाजे स्वमानमर्यादे विचिन्त्य क्षणं तूष्णीकः तिष्ठति, शकारेण प्रतिपुनः१० रुत्तेजितस्तु 'मया कथमीदृशं वक्तव्यं यथा गणिका मम मित्रमिति; अथवा यौवनमत्रापराध्यति न चारित्र्यम्' इति प्रतिवक्तीति। प्राणदण्डेन दण्डितः चारुदत्तः यदा वधस्थानं प्रापितः तदा एव मूर्छान्तः पुनः संज्ञाम् उपेत्य चारुदत्तवधं च श्रुत्वा वसन्तसेना अविलम्बं तत्र आगच्छति चारुदत्तं च रक्षति। एतस्मिन् एव अन्तरे राजधान्यां राजद्रोहः प्रसृतः येन कारामोचप्राप्तो चारुदत्तेन उपकृतः आर्यकः तत्रत्यं नृपं पालकं१५ सिंहासनात् प्रच्याव्य स्वयम् उज्जयिनीराजासनम् अध्यास्ते चारुदत्तस्य उपकारप्राग्भारं च स्मरन् तं कस्मिंश्चिद् महति राज्याधिकारपदे नियुनक्ति॥

## आलोचना

कालिदासभवभूत्योः नाटकेभ्यः मृच्छकटिकस्य महान् भेदः दृश्यते। अत्र हि न च नायकः सर्वगुणादर्शः अस्ति न च प्रतिनायकः सर्वदुर्गुणैकनिधिः।२० चारुदत्ते अनेकसद्गुणसंयोगेऽपि स कदाचिदपि दुष्यन्तो यथा 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति नैव विकत्थते। स हि नृत्ये गीते च निष्णाति सङ्गीतं च प्रेम्णा श्रोतुं गच्छति, द्यूतं यावच्च न जुगुप्सते। एतेन लोकसामान्यं मनुजत्वं तस्य सिद्धम्। वसन्तसेनाऽपि च न च कालिदासीयशकुन्तलावद् मधुरेण कुमारीसौन्दर्येण न च भवभूतिपात्रवत् प्रौढपुण्यगौरवेण अलङ्कृता२५ आभाति। विवाहहेतुषु गणिका अपि तस्याः हृदयं शुद्धं चारुदत्ते च तस्याः प्रीतिः उदात्ता अभवत। यदा च कामाभिभूतः शकारः तां व्यापादनभयं दर्शयति कण्ठे निपीड्यमाना च तां मारयति तदाऽपि चारुदत्तविषयकः तदनुरागः अविचलितः अभूत् सा च 'नमो चारुदत्तस्य' इति उदगिरत॥

मृच्छकटिके सर्वेषामपि पात्राणां प्राधान्येन यैः कठोरं वस्तुतत्त्वं३० व्याप्यते दृष्टेन अस्य नाटकस्य महान् विशेषः। क्रियावेगो (Action) ऽपि चात्र भूयान् दृश्यते। तस्मात् सर्वमपि क्रमबद्धमेव खलु मृच्छकटिकं वर्तते। अत्र प्रमुखानां सर्वेषां सन्निहितानां लघु (minor) पात्राणां स्वभावः अतीव पृथक् पृथक्

भासन्ते इति च अस्य अपरो महान् गुणः। अस्य पात्रेषु राजपारिषदाः, रक्षिणः (Police men), लुण्टाकाः, चौराः, राजनीतिचतुराः भिक्षुकाश्चेति नानाविधपुरुषाः सन्ति। तृतीयेऽङ्के मनोहरे सन्धिच्छेदवर्णने चौर्यं हि शास्त्रोक्ता कठिना कला इति पठ्यते। षष्ठे अङ्के वसन्तसेना चारुदत्तस्य सूनोः मृण्मयीं शकटिकां रत्नालङ्कारैः पूरयति। अथ एते एव रत्नालङ्काराः न्यायालये चारुदत्तस्य व्यवहारदर्शनावसरे तस्य मन्तुमत्त्वस्य साक्षिणो भूत्वा कथास्वरूपं जटिलं विदधति। चारुदत्तवसन्तसेनयोः प्रणयकथा न खलु काचित् सार्वजनिकी वार्ता वर्तते, अथ तया सह सर्वजनाभिरुचिविषयस्य राजविप्लववृत्तान्तस्य संयोजनेन नाटकस्य कोऽपि चमत्कारातिशयः सम्पादितः कविना॥

### कालः

कालस्तु शूद्रकस्य बत सन्दिग्धः। वेतालपञ्चविंशतिकायां, दण्डिनः दशकुमारचरिते, हर्षचरिते कादम्बर्यां च तदुल्लेखप्राप्तेः तस्य तेभ्यः प्राचीनता तु स्वयं सिद्धा। कह्लणमतेन च यद्यपि विक्रमादित्यात् पूर्वोऽसौ खल्वस्ति, परं कोऽयं विक्रमादित्यः विक्रमाब्दप्रवर्तकः एव कश्चिदपरो वा इति तावद् निश्चेतुम् अशक्यम्। भासकृतस्य चारुदत्तस्य कथैव मृच्छकटिके समुपबृंहिता[1] इति भासाद् अर्वाचीनत्वं च शूद्रकस्य आयातम्। 'अवन्तीसुन्दरीकथायाम्' उल्लिखितस्य शिवस्वातेः समकालिकत्वम् अस्य मत्वा ये केचिद् अस्य कालम् अनुसन्धातुं प्रयस्यन्ति स्म तेषु एकेषां (मतेन) ८१ मिते खीष्टाब्दे पुराणप्रसिद्ध नाराशंसीतिहासादिषु विश्वसताम् अन्येषां च (मतेन) खीष्टपूर्वे चतुर्थे वा पञ्चमे वा शतके किल शिवस्वातिः बभूव॥

## ७६ हर्षकर्तृकत्वेन विदितं रूपकत्रयम्

### (क) रचयिता

(अ) प्रियदर्शिका-रत्नावली-नागानन्दानां प्रस्तावनासु नृपहर्षस्य नामधेयं तत्कर्तृत्वेन पठ्यते। इतिहासे च न्यूनान्न्यूनाः हर्षनामानः चत्वारः नृपाः प्रसिद्धाः। यथा,

(१) कश्मीरभूजानिः हर्षः।
(२) धारावरावरस्य नृपभोजस्य पितामहः हर्षः।
(३) मातृगुप्तस्य[2] अभिभावकः (Patron) उज्जयिनीनाथः हर्षविक्रमादित्यः।
(४) कान्यकुब्जक्ष्मापतिः हर्षवर्धनश्चेति॥

---

१. अत्र विस्तरेण प्रतीते तृतीयाध्याये द्रष्टव्यम्॥

२. तथा चोक्तं राजतरङ्गिण्यां (४६८) कह्लणेन—

'तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः।
एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत्॥'

अथ एषां कतमः हर्षः तावद् एतद्रूपककर्ता इति पृच्छायां 'कश्मीरराजः (१११३–११२५ ख्री.) श्रीहर्षः रत्नावलीकर्ता' इति विल्सनमहोदयेन यदुक्तं तदयुक्तम्, यतो हि, (एकादशशतकमध्यवर्तिना क्षेमेन्द्रेण औचित्यालङ्कारे पद्यद्वयस्य[1], (अष्टमशतकचतुर्थपादभवेन) नृपजयापीडमन्त्रिणा दामोदरेण च कुट्टिनीमते न्यूनान्यूनं सवृद्[2] रत्नावली उदाहृता लभ्यते। तस्माद् रत्नावलीकारेण नूनम् अष्टमशतकाद् बहुतरं ५ पूर्वभाविना भवितव्यम्। अथ इत्सिङ (Itsing) लेखेभ्यः ज्ञायते यत् 'शिलादित्यो[3] नाम नृपः जीमूतवाहनस्य बोधिसत्त्वस्य कथां पद्ययित्वा गायकवर्गेण नृत्याभिनयसहितं प्रयोज्य च स्वसमये एव लोकप्रचरिताम् अकरोद्' इति। बाणसाक्ष्येण च हर्षवर्धनस्य कविप्रतिभाशालित्वं स्पष्टम्॥

## [आ] धावकः बाणो वा ?     १०

एतां रूपकत्रयीं विरच्य धावकः हर्षवर्धनाद् धनं लब्धवान्[4] इति यद् नवमशतकभवेन राजशेखरेण उक्तं तदेव काव्येन धनलाभम् उदाहरतः काव्यप्रकाशकृन्मम्मटभट्टस्य 'श्रीहर्षादेर्धावकादीनामिव धनम्' इति वाक्ये सङ्केतितं भाति, यतो हि मम्मटवाक्याद् अनुमीयते यद् धावको नाम कोऽपि कविः किमपि काव्यं कृत्वा पुरस्कारे हर्षवर्धनात् प्रभूतं द्रविणं लेभे इति। केचित् तु इह मम्मटराजशेखर- १५ वाक्ययोः महान्तम् अर्थभेदं पश्यन्ति। ते हि 'राजशेखरवचनाद् रत्नावली-प्रभृति-रूपकत्रयस्य कर्तृत्वं स्पष्टं धावकस्य, मम्मटवचनात्तु न' इति कथयन्ति। अथ राजशेखरवाक्याद् एतद्रूपकत्रय्याः कर्ता धावकः इति स्पष्टेऽपि धावककृतस्य एकस्यापि काव्यादेः अप्राप्ते सहसा राजशेखरवचने अपि विश्वासं कर्तुम् अशक्यम्॥

अथ क्वचिद् मम्मटस्य उक्ते वाक्ये धावकस्थाने बाणेतिपाठस्य[5] प्राप्ते, हर्ष- २० चरितं विरच्य हर्षवर्धनसकाशाद् बाणेन विपुलं धनं प्राप्तम् इति च निह्नोतुम् अशक्ये, बाण एषां कर्ता इति फलति। एतेषां रूपकाणां शैल्याः हर्षचरितशैलीतः अत्यन्तम् अपकृष्टत्वात् पुनः 'न खलु बाणकृतानि इमानि' इति आयाति। अपि च, साहित्यगुणे हर्षचरितस्य परमोत्कृष्टत्वात् तद्विक्रयणाद् बाणस्य यावान् अर्थलाभः सम्भाव्यते न तावान् एषां रूपकाणां तथाकथित (Alleged)-पणनात्। तस्मान्न बाणः एषां प्रणेता २५ इति सिद्धम्॥

ननु यस्तर्हि एषां कर्ता इति चेद्, हर्षः इति सम्भाव्यते। दृश्यन्ते च कति-

---

१. रत्नावली—१,८, २,२, २,३, २,४, ३,१२ ॥

२. रत्नावली – १,२४ ॥

३. हर्षवर्धनस्यैव नामान्तरं शिलादित्य इति ॥

४. विलोक्यतां चतुर्दशे खण्डे भास-धावकयोर्भेदाभेदविचारे उद्धृतानि राजशेखरवचनानि ॥

५. कश्मीरलब्धकाव्यप्रकाशग्रन्थेष्वयं पाठः ॥

पद्यानि कमनीयानि पद्यानि सुभाषितावलीषु हर्षनाम्ना उद्धृतानि[1] ॥

## (इ) समानकर्तृकत्वम्

नागानन्दे नान्द्यां भगवान् बुद्धः स्तूयते, नायकजीमूतवाहनः बोधिसत्त्वोऽस्ति, अहिंसा परमो धर्मः इति सिद्धान्तश्च मुख्यतया प्रतिपाद्यते । अतः अस्य बौद्धसम्प्रदायानुसारित्वं स्पष्टम् । पुरुषान्तरकर्तृकं नागानन्दम् इति मैकडानलमहोदयेन यदुक्तं तदयुक्तं, त्रयाणामपि हि एषां रूपकाणां प्रस्तावनासु तेषां हर्षकर्तृकत्वम् अभिहितं, पद्यं च एकं रत्नावलीप्रियदर्शिकयोः उभयत्र, पद्यद्वयं च प्रियदर्शिकानागानन्दयोः उभयत्र लभ्यते, शैली च तेषां त्रयाणां समाना इति समानकर्तृकत्वं तेषामसन्दिग्धम् ॥ ५

## (ख) कथावस्तु १०

रत्नावली प्रियदर्शिका च द्वे लक्षणेन नाटिके भवतः । तयोः प्रत्येकं चत्वारः अङ्काः सन्ति, विषये निर्माणप्रकारे च ते अन्योन्यसदृश्यौ स्तः । उभयत्र नायकः उदयनः महिषी च वासवदत्ता अस्ति । रत्नावल्याः कथावस्तु उदयनसागरिकयोः[2] अनुरागकथा वर्तते । पोतभङ्गेन दुरवस्थाम् अनुभवन्ती रत्नावली उदयनराजभवने प्रवेशं प्राप्य महिष्याः वासवदत्तायाः दासी बभूव । अथ उदयनरत्नावल्योः मिथोऽनुरागे वासवदत्तया विदिते पतिसुखकाम्यया स्वसुखपरित्यक्त्री आर्यवधूः इव सा उदयनेन रत्नावल्याः पाणिपीडनम् अनुमन्यते । रत्नावलीकथावस्तुनः आधारः इतिहासो वा महाकाव्यपरम्पराप्रसिद्धा अनुश्रुति र्वा स्यादस्ति, एषा हि कथा प्रकारान्तरेण कथासरित्सागरे स्थिता । रत्नावलीकथावस्तु कालिदासीय मालविकाग्निमित्रस्य च राजशेखरीय कर्पूरमञ्जर्याश्च कथावस्तुना अत्यन्तं साम्यं बिभर्ति ॥ १५ २०

प्रियदर्शिकायाम् उदयनाऽऽरण्यिकयोः[3] प्रणयकथा विषयीकृता । अङ्गराजस्य महाराजदृढवर्मणः सुता प्रियदर्शिका उदयनस्य वाग्दत्ता वधूः आसीत् । तयोः विवाहात् प्रागेव तु दृढवर्मणि कलिङ्गराजेन जित्वा बन्दीकृते प्रियदर्शिका आरण्यिकेत्यारोपितनाम्ना उदयनराजप्रासादं प्रविष्टा । अथ नानाघटनापरिवर्तेषु संजातेषु प्रिय-

---

१. हर्षस्य नाट्यशास्त्रोपरि कृता टीकाऽपि तावद् विदिता । सा च क्वचित् क्वचिद् अभिनवगुप्तेन, शारदातनयेन बहुरूपमिश्रेण च शब्दशः अनूद्यते (Is quoted) । अन्यच्च, यद्यपि नाट्यशास्त्रप्रतिपादितविषयो रत्नावल्यां निपुणं सम्यक् च अनुसृताः प्रयतोऽयन्ते, अथापि नाट्यशास्त्रटीकाकृद् यो हर्षः स एव रत्नावल्याः कर्ता इति सावष्टम्भं भणितुं न प्रभवामः ॥

२. सागरिका सिंहलराजपुत्री रत्नावली एव ॥

३. आरण्यिका प्रियदर्शिका एव ॥

दर्शिका एव खलु आरण्यिका इति ज्ञाते उदयनः प्रियदर्शिकाम् उपायंस्त[1] ॥

अथ पाञ्चाङ्किके नागानन्दे जीमूतवाहनस्य अवदानं[2] गीतम् । स हि गरुडाय तदशनीभूतस्य अहेः स्थाने आत्मानम् अर्पयति । तस्य अनेन कर्मणा सुप्रीता गौरी तं पुनः उज्जीवयति येन तस्य दयिता विलपन्तौ मातापितरौ च उच्छ्वसन्ति । मृताः सर्पाः अपि अनुप्राणिताः भवन्ति गरुडश्च ततः प्रभृति सर्पभोजनत्यागं प्रति- ५
जानीते । नाटकेऽत्र हिन्दुबौद्धधर्मयोः मधुरा संसृष्टिरस्ति, तया च एतन्नाटकरचना-युगस्य धार्मिकी अवस्था सम्यक् प्रकाश्यते ॥

## [ग] शैली

हर्षस्य शैली परिष्कृता शुद्धा च वैदर्भी । अस्य कृतौ च तादृशी सूक्ष्मेक्षिका दूरोत्तरना उत्प्रेक्षा च नोपलभ्यते यादृशी भासस्य कालिदासस्य च कृत्योः उपलभ्यते, १०
अथापि सुरभिणा प्रसादगुणेन आभृता सा खलु विभाति । अस्य संस्कृतभाषा अप्रस्खलथा, श्लिष्टा शिष्टक्रमयुक्ता च, अलङ्कारैः तदलङ्करणं च यथोचितं लोचना-सेचनकं च चास्ति । सत्यपि च हर्षे उपज्ञायाः स्वल्पे वर्णनशक्तिस्तु अस्मिन् *महती विद्यते, शैली च एतत्सर्वकृतीनाम् एकरसमसृणा पाठकमनो रमयतितराम् ।*
तथाहि उदयनो वासवदत्तामाह— १५

'आरुह्य शैलशिखरं त्वद्वदनापहृतकान्ति सर्वस्वः ।
प्रतिकर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥'

अथ हुताशनं सम्बोध्य उदयनो वक्ति—

'विरम विरम वह्ने ! मुञ्च धूमानुबन्धं,
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् । २०
विरहहुतभुजाऽहं यो न दग्धः प्रियायाः,
प्रलयदहनभासा तस्य किं त्वं करोषि ॥'

*नागानन्दे च इदं किलैतद् जीमूतवाहनेन उच्यते—*

'स्वशरीरमपि परार्थे यः खलु दद्यामयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमन्ये ॥' २५

## (घ) भाषा छन्दांसि च

अत्र संस्कृतेन सह विविधविधप्राकृतानां प्रयोगोऽपि हर्षकृतौ विलोक्यते । तेषु च शौरसेनी प्रधानायते । पद्येषु माहाराष्ट्री नागानन्दीयेन चेटपात्रेण च भाषणे मागधी व्यवहृता । शार्दूलविक्रीडितं हर्षस्य बहुमतं वृत्तं यत्र त्रिसप्ततिः पद्यानि बद्धानि, तद् अपोऽधश्च स्रग्धरा दृश्यते ॥ ३०

---

१. इह नाटिकायां सकला नाट्यस्यान्तर्निर्वर्तितं नाटकान्तरं वर्तते यत्र (पूतमनोरमावेद) नृप (वासवदत्ताप्रियदर्शिकाभ्याम्) आरब्धविवाहयाम् अयन्तम् अनुरज्यते ॥

२. एतद्विषये कथा कथासरित्सागरे (द्वाविंशे तरङ्गे) वर्णिता ॥

## (८०) मुद्राराक्षसम्

संस्कृते सुप्रसिद्धं खलु मुद्राराक्षसं नाम नाटकं वर्तते। सप्तभिः अङ्कैः पूर्णे नाटकेऽत्र मौर्यराजवंशकालिकी राजानुबन्धिनी कथा एका वर्ण्यते। अन्तिमनन्दनृपस्य भक्तसचिवं राक्षसं चन्द्रगुप्तगृह्यं कर्तुं चाणक्यप्रयुक्ता कूटनीतिः, म्लेच्छराजकुमारं मलयकेतुं च स्वपक्षस्थौ कृत्य नूतननृपं मौर्यचन्द्रगुप्तं सिंहासनाच्च्यावयितुं राक्षसोपायाः चतुरोपायाश्च इह कर्णन्यायेन शैल्या समुपनिबद्धाः। चाणक्यस्य भेदनयेन मलयकेतौ राक्षसे अविश्वासिनि सति अपमानम् असहमानः राक्षसः मलयकेतुसङ्गम् अत्याक्षीत्। अथ स्वकुटुम्बाश्रयदानहेतोः स्वमित्रस्य चन्दनदासस्य जीविताय मृत्युभयम् आगतं वीक्ष्य राक्षसः मित्रस्य जीवितं रक्षितुम् आत्मानं चाणक्याय समर्पयत्। 'मित्रचन्दनदासस्य प्राणरक्षा चेद् इष्टा राक्षसेन नृपचन्द्रगुप्त-मौर्यस्य प्रधानामात्यपदम् अवश्यं स्वीकार्यम्' इति चाणक्येन वचननिगृहीतः राक्षसः गत्यन्तराभावाद् अनिच्छयाऽपि प्रधानमन्त्रित्वम् स्वीचकार। एवं हर्षान्तमिदं नाटकं सम्पन्नम्॥

कथावस्तु तु मुद्राराक्षसस्य ऐतिहासिकं कूटराजनीतिव्यवहारबहुलं च खलु अस्ति। शृङ्गारकरुणरसयोः अत्र लेशतोऽपि स्पर्शो न विद्यते। चन्दनदासपत्नीरूपेण केवलं हर्षैकं स्त्रीपात्रं सप्तमाङ्के प्रवेश्यते, तदपि तस्य कठोरकर्तव्यपालनस्य आत्मोत्सर्गं च दर्शयितुमेव न तु दूरतोऽपि शृङ्गारसम्पर्कम् आरचयितुम्। यद्यपि मुख्यो रसोऽत्र वीर एव, तथापि न स इह तथा अभिव्यक्तिम् आपन्नः लभ्यते यथा भवभूतिकृते महावीरचरिते। परं सर्वारम्भाणाम् एकक्रियाकारित्वं (Unity of action) नाम यो नाटकीयगुणविशेषः स यथा इह लक्ष्यते न तथा कस्मिंश्चिदपि संस्कृतनाटकान्तरे। अत्र हि आ लघोः आ महतः सर्वेषां पात्राणाम् तत्तत्क्रियोद्देश्यं राक्षससङ्ग्रहणं नाम केवलम् एकम्। एतदुद्देश्यलाभाय उद्यतानि अस्य पात्राणि न धर्मम् आकलयन्ति नापि अधर्मम्, मैत्रीम् आरचयन्ति च भञ्जयन्ति च। राक्षसो विरोधं जह्याद् इति कृत्वा महात्मनि चन्दनदासेऽपि वधदण्डः पात्यते। पात्राणां व्यक्तयश्च अत्र प्रतिस्वं व्यक्तं भासन्ते। सर्वाणि च पात्राणि इह यथागुणं नाना-युगलेषु विभक्तानि इत्येष नाटकस्य अस्य अपरो विशेषः। तथाहि, कूटनीतिनिपुणयोः चाणक्यराक्षसयोः एकं युगलं, विभिन्नगुणवतोः परस्परं प्रतिद्वन्द्विनोः नृपचन्द्र-गुप्तमलयकेत्वोः द्वितीयं युगलं, भागुरायणसिद्धार्थकयोः तृतीयं युगलम्। एवं चान्यत् स्वयम् ऊह्यम्। प्रतियुगलं च द्वयोः पात्रयोः गुणवैषम्यं सम्यक् स्फुटीकृतं दृश्यते। भाषा भव्या ओजस्विनी च, पद्यानि हृद्यानि मधुराणि च। केचित् पाश्चात्यसमीक्षकाः सकलसंस्कृतनाटकेषु केवलं मुद्राराक्षसं यथार्थं नाटकम् अङ्गीकुर्वन्ति॥

### कर्ता

प्रस्तावनातो ज्ञायते यद् विशाखदत्तो नाम मुद्राराक्षसप्रणेता दत्तोपाह्वे उच्च-

कुले जन्म लेभे। एतत्कुलसम्भवाः पुरुषाः उच्चराजपदेषु किल नियुक्ताः बभूवुः। विशाखदत्तस्य पितापितामहौ च क्रमेण महाराजसामन्तपदवीभ्यां भूषितौ अभूताम् इति। तेन च व्याकरणे, नाट्यशास्त्रे, राजतन्त्रे, ज्योतिषे तर्के च महापाण्डित्य-प्रागल्भ्यम् अवाप्तम् आसीत्। स्वयं शैवोऽपि बौद्धधर्मे यत्किञ्चिदिव श्रद्दधानः जैनधर्मे अरुचिम् अबध्नात्। अस्य कतिपयानि पद्यानि सूक्तिसङ्ग्रहेषु अपि सङ्गृही- ५
तानि विलोक्यन्ते ॥

## कालः

मुद्राराक्षसनिर्माणकालावधारणे नानामतानि उपलभ्यन्ते। तथाहि—

भरतवाक्ये तदानीन्तनस्य नृपस्य नामधेयं केषुचित् पुस्तकेषु अवन्तिवर्मेति अन्येषु च चन्द्रगुप्तेति द्विधा पठ्यते। तत्र अवन्तिवर्मा इति चेद् गृह्यते तर्हि १० भारतेतिहासे द्वौ अवन्तिवर्माणौ विदितौ— कश्मीरराजश्च (८५५–८८३ खी) प्रभाकरवर्धनस्य पितृव्यसुतः मौखरिवंश्यः कान्यकुब्जाधिपश्च (खीष्टषष्ठशतकोत्तरा-र्द्धभवः)। तयोः काश्मीरिकः अवन्तिवर्मा अत्र स्मृतः इति कल्पयित्वा केचिद्[1] विद्वांसः तत्कृपाश्रितं विशाखदत्तं भणन्ति। जेकोबिमहाशयश्च '८६० मिते खीष्टाब्दे दिसम्बरमासे द्वितीयस्यां तारिकायां यश्चन्द्रोपरागः अभूत् स एव १५ मुद्राराक्षसे वर्णितः' इति मन्यते। प्रमाणं तु एतदपेक्षं किञ्चिन्नोपलभ्यते ॥

अपरे तु 'म्लेच्छैरुद्विज्यमाना' इति भरतवाक्यस्थपदं साभिप्रायम् उत्प्रेक्ष्य 'अत्र तस्यैव अवन्तिवर्मणः ग्रहणं युक्तं यो म्लेच्छेभ्यो भारतभुवं ररक्ष, स च कान्यकुब्ज-राजः एव न तु काश्मीरिकः, कान्यकुब्जपतिर्हि अवन्तिवर्मा हूणोच्छेदे प्रभाकर-वर्धनस्य सहायो भूत्वा भारतभुवं म्लेच्छेभ्यः अरक्षत्, काश्मीरिकस्तु अवन्तिवर्मा २० न कञ्चन विदेशनृपं जिगाय' इति कथयन्ति ॥

स्टेनकोनो (StenKonow)-महोदयस्तु पुनः चन्द्रगुप्तेतिपाठं सुन्दरं मत्वा 'चन्द्रगुप्तद्वितीयः (३७५–४१२ खी.) खलु अत्र चन्द्रगुप्तपदेन ग्रहणीयः' इत्याह। तस्मिन् काले पुनः हूणैः चन्द्रगुप्तद्वितीयपरिपालितस्य देशस्य आक्रमणाकरणाद् 'म्लेच्छैः उद्विज्यमाना भूः चन्द्रगुप्तेन रक्षिता' इति कथनं न सङ्गच्छेत ॥ २५

ननु—

'प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥' ३०

इति यत् पद्यं मुद्राराक्षसे भर्तृहरिशतकेषु च उभयत्र लभ्यते तत्र 'त्वं'-शब्दः

---

१. कीथमतेन च मुद्राराक्षसं रघुवंशमृच्छकटिकशाकुन्तलेभ्यो नवीनं, नवमशतक-भवं वा, ततोऽपि प्राचीनतरं वा सम्भाव्यते ॥

द्योतयति यद् वस्तुतः पद्यम् इदं मुद्राराक्षसीयम् एव, ततश्च भर्तृहरिणा गृहीतम्। तेन 'भर्तृहरितः प्राचीनः विशाखदत्तः' इत्येतावद् अस्य कालविषये वक्तुं शक्यम् ॥

## (८१) वेणीसंहारम्

भट्टनारायणकृते वीररसप्रधाने षडङ्कमये वेणीसंहारे महाभारताद् उपाख्यानम् एकम् उपादाय समुपनिबद्धम्। 'यावत् सभायां दुःशासनेन कृतः मदवमानः न प्रति- ५ शोध्यते तावदहं स्ववेणीं न संहरिष्यामि' इति किल द्रौपद्या प्रतिज्ञातम् आसीत्। धार्तराष्ट्रैः सह सन्धिविधारावसरे कुपितः भीमः अवोचद् 'यदि युधिष्ठिरः दुर्योधनेन सन्धिं करोति, अहं तदा तत्सङ्गं जहामि' इति। न च कृष्णकृतः सन्धिप्रयत्नः फलम् अदर्शयत्। अथ भीषणे युद्धे प्रवृत्ते सर्वे कौरवाः पञ्चत्वं गताः, भीमश्च दुःशासनरक्तेन दिग्धाभ्यां स्वहस्ताभ्यां द्रौपदीकेशसञ्चयं चकार ॥ १०

### शैली

चरित्रचित्रणे भट्टनारायण कृते चारुणि अपि, मृच्छकटिके इव अत्रापि च पात्राणां व्यक्तिषु प्रतिस्व विशदासु अपि, इह वर्णनबाहुल्याद् ऐतिहासिककथा- निविस्तराच्च क्रियावेगः (Action) न दृश्यते। शृङ्गारनिबन्धनं च हृदयङ्गमं नास्ति, हेतुश्चात्र नाट्याचार्यकृतिविधीनां दास्यभावेन अनुपालन प्रतिभाति। मुद्राराक्षसस्य इव १५ वेणीसंहारस्य रचना अपि ओजसा उत्साहेन च व्याप्ता। भवभूतिरिव भट्टनारायणोऽपि यत्र तत्र संस्कृते प्राकृतगद्ये च बहुशः दीर्घसमासान् प्रयुङ्क्ते अवसरे प्राप्ते च अर्थानुरूपानां कुण्ठनः कृतः शब्दघटटापेनैव ओजायते। अत्र करुणहासयोः अपि रमणीयः संयोगोऽस्ति। अभिव्यञ्जकस्य अर्थगौरवं शैलीसौकुमार्यं च विश्रुतम्। भट्टनारायणस्य निशावर्णनस्य सुपेशलत्वात् स निशानारायणेति अभिख्यायते ॥ २०

### कालः

(अ) वामनेन, आनन्दवर्धनेन, अभिनवगुप्तेन च भट्टनारायणस्मरणाद् असौ अष्टमशतकात् प्राचीन इति अनुमीयते ।

(आ) साम्प्रदायिकास्तु (सप्तमशतकपूर्वार्द्धभवेन) वङ्गक्षितिपतिना आदिशूरेण आमन्त्रितः स कान्यकुब्जेभ्यो वङ्गान् जगाम इति वदन्ति ॥ २०

(इ) धर्मकीर्तिकृते रूपावतारे या नीवीनाम्नी टीका—तस्याः एकस्माद् हस्ताक्षिप्तपुस्तकाच्च ज्ञायते यद् बाणप्रेरणया भट्टनारायणः कस्यचिद् बौद्धभिक्षोः शिष्यत्वम् अङ्गीकृतवान्, ततश्च धर्मकीर्तिश्च असौ (=भट्टनारायणः) च मिलित्वा रूपावतारम् अरचयताम् इति। एवं सुबाणसमसामयिकः भट्टनारायण इति उक्तं भवति॥

# (८२) भवभूतिः

## (अ) संस्तवः

संस्कृते प्रधाननाटककाराणाम् अन्यतमस्य भवभूतेः वास्तविकं नामधेयं श्रीकण्ठ आसीत्। निर्भाभिजन विश्रुतश्रोत्रियकुलोत्पन्नः असौ स्वयं नानाशास्त्रपारदृश्वा[1] बभूव। तस्य आद्यकृतौ आलोचकैः कटु आलोचितायाम् अपि स्वकाव्यफलाप्रकर्षं मानयन् भविष्यति काले तद्गुणादरं सम्भावयन् स अभग्नोत्साहः नाटकान्तर-रचनाप्रवृत्तो बभूव। वाग्देवी दासी भूत्वा यथा ब्राह्मणं सेवते तथैव तम्[2] इति खलु तस्य अभिमान आसीत्। पुनश्च सम्मते निर्दोषायामपि कविकृतौ जनः तथैव दोषसम्भावना कुरुते यथा सत्यां स्त्रियाम्[3]। अथ—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते तु मम कोऽपि समानधर्मा,
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥'

इत्युक्त्वा तेन स्वगताभिलाषा सम्यग् अभिविज्ञप्ता॥

## (आ) तस्य ग्रन्थाः

भवभूतेः महावीरचरितं मालतीमाधवम् उत्तररामचरितं चेति रूपकत्रयं केवलम् उपलभ्यते। एतन्नाम्ना सदुक्तिसङ्ग्रहेषु उद्धृते, पूर्वोक्तरूपकत्रये च अप्राप्यमाणे, पद्ये तु अनुमीयते यत् कृत्यन्तरमपि अस्य अवश्यम् आसीद् यदप्रकृष्टं चेत् कदाचिल्लभ्यं भविष्यति। इदं तावद् रूपकाणि अस्य अधस्तात् परिचाय्यन्ते।

### (१) महावीरचरितम्

महावीरचरितं भवभूतेः आद्या कृतिः[4] इति सम्भावयन्ति परीक्षकाः। अत्र

---

१ आरम्भिकयोः द्वयोः नाटकयोः सम्परामृष्टा ग्रन्था न केवलं वेदोपनिषद्ब्राह्मणसूत्रपारमार्थिकं वैदिकं साहित्यम् एव अपि तु कामशास्त्रार्थशास्त्र-रामायणमहाभारत-कालिदासादीनां कृतीरपि खलु स्मारयन्ति॥

२ तथा चोक्तं तेन 'यं ब्राह्मणमियं देवी वाग्वश्येवानुवर्तते' इति॥

३ कथितं हि तस्यात्मना तावत् 'यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः।' इति॥

४ सम्प्रदायविदस्तु इदं 'महावीरचरितं पञ्चमाङ्कस्य षट्चत्वारिंशत्तमश्लोकपर्यन्तं केवलं भवभूतिना रचितं, शेषं तु सुब्रह्मण्यकविना विरचितम्' इति वदन्ति। किं कारणं तद् भवभूतिना पूर्णं न लिखितम् इति तु न कस्यापि विदितम्॥

भवभूतिना स्वपूर्वपुरुषेतिवृत्तं सविस्तरम् उपन्यस्तम्। अपरिष्कृता अस्य रचना 'काव्याभ्यासकाले किल कविना इदं कृतम्' इति लिङ्गयति। अत्र कविः रामरावणयोः शाश्वतं महावीर (रामं) निहन्तुं रावणकृतान् अभ्युपायांश्च कथावस्तुत्वेन निबबन्ध। अत्र रामायणात् कथाम् आदाय बहुशः कर्त्रा तत्र तत्र अन्यथयितं दृश्यते। इह यद्यपि मालतीमाधवस्य कल्पनासौष्ठवम् इव कल्पनासौष्ठवं न विद्यते ५ तथापि कथानकस्य ऐक्यं यथाऽत्रास्ते न तथा मालतीमाधवे। अत्रत्यानि कतिपयानि प्रकरणानि तावद् अनाटकीयानि इव भान्ति, विस्तरजालेन च पात्राणां दीर्घदीर्घैः भाषणैश्च इह क्रियावेगस्य प्रगतिः (Progress of action) बाध्यते। चरित्रचित्रणं च तथा मन्दं वर्तते यथा रावणमाल्यवतोः मकरन्दशङ्करयोः पात्रयोः अपि व्यक्ती सम्यङ् नैव विभाव्येते॥ १०

## (२) मालतीमाधवम्।

प्रकरणाभिधे दशाङ्कमये मालतीमाधवे कथासरित्सागरस्थाः नानाकथाः एककथात्वेन परिणमय्य किमपि रुचिरम् अभिनवं वस्तु उत्पादितं भवभूतिना। यदि नाम मृच्छकटिकम् अवलोक्य तादृशं किमपि रमणीयं रूपकम् निर्मातुं कवेः मनसि उत्साहः उदितः स्यात्। मृच्छकटिके यथा मनोरमः हास्यरसः अवाप्यते,१५ न तथा पुनः अत्र। अत्र तावद् विदूषकस्यैव यदा अभावः तदा हास्यरसवृत्तेः किमु वक्तव्यम्। जगति यद्यच्च घोरं भीषणम् अतिमानुषं चास्ति तत्र तत्र तु महान् भवभूतिमनोऽभिनिवेशः खलु विलोक्यते॥

मालती नाम काचिद् राजसचिवसुता यथा माधवनाम्नि कस्मिंश्चित् तरुणे विद्यार्थिनि अन्वरज्यत तथैव सोऽपि तस्याम्। तयोः प्रणयकथा मालतीमाधवे वर्ण्य-२० विषयत्वेन उपात्ता। मालतीपितुः स्वामी नृपः मालत्याः विरक्तिम् जनेन येन स्वप्रिय-पुरुषेण मालतीं परिणाययितुम् ऐच्छद् विवाहदिने मकरन्दो नाम माधवमित्रं मालती-वेषं परिधाय वधूत्वेन तेन सह अयासीत्। कथां याथार्थ्येन उपस्कर्तुं कृतेऽपि कविना अतनुप्रयत्ने पात्राणां शोकानुरागव्यवहारयोः पाठकानां सत्यत्वप्रतीतिः न जायते। सहसा दैवयोगाद् द्विः भूयाद् मरणाद् मालतीप्राणरक्षा भवति इति सर्वमपि हि कथानकं२५ दैवयोगानुप्राणितं भाति। नवमाङ्के प्रणष्टां प्रियतमां प्रति संदेशं हर्तुं माधवेन प्रार्थितः मेघः मेघदूतवृत्तं चतुर्थोऽङ्कश्च विक्रमोर्वशीयगतम् उदन्तं स्मारयति। कालिदासस्य कामनीयकरामणीयकयोः भवभूतौ असतोः अपि, अङ्केऽस्मिन् भवभूतिः करुणरसपाके कालिदासम् अतिशेते॥

## [३] उत्तररामचरितम् ३०

उत्तररामचरितं नाम श्रेष्ठा कृतिः किल भवभूतेः। प्रौढिमाप्तेन एव तेन इदं प्रणीतम् इति तावत् वस्तुवे 'शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम्'

(उ०,७,२०) इत्युक्त्या स्पष्टम्। निर्मूलादपि लोकापवादाद् भीतेन रामेण गृहाद् वने निर्वासितायाः सीतायाः या कथा रामायणे उत्तरकाण्डे पठ्यते सैव अस्य नाटकस्य विषयः, परं नाटकोपयोगाय भवभूतिना बहुशः संस्कृता तु एषा स्नातप्रसाधिता उद्वाहार्था षोडशी इव नूनम् उद्भासते। तत्र भवभूतिनिर्वर्तितासु परिवृत्तिषु मुख्यतासु (१) चित्रदर्शनम्, (२) अदृश्यया सीतया वासन्ती-रामयोः कथालापश्रवणम्, ५ (३) वासन्तीसमक्षं रामेण स्वानुरागस्य सीतागतत्वस्वीकरणम्, (४) लवचन्द्रकेतुयुद्धम्, (५) वसिष्ठादेः प्राचेतसाश्रमागमनम्, (६) रामसमक्षं तस्यैव उत्तरचरितस्य नाटकेन प्रयोगश्च इत्येतास्त्यः इह नाम्ना कीर्तनम् अर्हन्ति ॥

सप्ताङ्कमये नाटकेऽस्मिन् कविना करुणरसपाकः परिनिष्ठां नीतः[1]। वस्तुतस्तु विषयेऽत्र भवभूतेः प्रकर्षः कव्यन्तरेण अनतिशयितः निशाम्यते। उत्तररामचरिते१० पाषाणहृदयाः अपि द्रवन्ति रुदन्ति च। 'एको रसः करुण एव निमित्तभेदाद् ', इत्यादिना कविः स्वयम् एतं स्वगुणं स्फोरयति इव इति आभाति। इह विषये कालिदासभवभूत्योः महद् वैसादृश्यं दृश्यते। शेक्सपियरवत् कालिदासः यम् अर्थं व्यञ्जनया निबध्नाति मिल्टनवद् भवभूतिः तमेव अभिधया। यत्सत्यं हृदये शोकेन समभिभूते को नाम चित्रल्पतुं पारयति। नहि शेक्सपियरनाटकेषु कार्डेलिया(Cordelia)-१५ शरीरं परितः सङ्गतेषु पात्रेषु एकतमम् अपि एकमपि शोकशब्दं वक्तुं प्रभवति; कालिदासकृतिषु अपि सीतात्यागिनं मिथ्या लोकापवादं श्रुत्वा यद्यपि रामस्य हृदयं स्नेहधर्माभ्यां दोलायते, अयोघनेन आहन्यमानं तप्तम् अयः शकलम् इव च शतधा विदीर्यते अथापि न च असौ मूर्च्छति न च अश्रूणि पातयति। धीरः नृपः इव स तदा सीतां वनं नेतुं तत्र त्यक्तुं लक्ष्मणम् आदिशति। यदा तु पुनः लक्ष्मण-२० प्रतिनिवर्तनक्षणे तम् उद्दिश्य सीतया दत्तं सन्देशं स लक्ष्मणमुखात् शृणोति तदा तदन्तर्वर्तिनोः नृप-मनुष्य-हृदययोः मध्याद् मनुष्यहृदयेन नृपहृदयं परिभूयते (The King in Rama gives way to the man in him) । तदा हि तल्लोचने अन्तर्निगूढबाष्पेण आकुलायिते; तदा असौ केवलं द्वित्रान् शब्दान् वक्ति, न तु क्रन्दति वा, यथामदृशो भावो वा। भवभूतेस्तु रचनासु काव्यकथासु इत्थं२५ सर्वमपि सहृत् प्रकरणं केवलं तदा परिसमाप्तिं नीयते यदा पात्राणि साश्रु गद्गदेन वचसा च क्रन्दन्तः मूर्च्छन्ति दर्शकाश्च कष्टं सहन्ति ॥

अथ अपि रामेण सीतापरित्यागः उचितः? अपि वा अनागस्त्वाम् असहायां च सीतां तथा विवासयता रामेण अन्याय्यं च नृशंसं च कर्म नानुष्ठितम्? इति यत् प्रायः अनुयुज्यते, तत्र इदं प्रतिवचनं स्यात् — यदा यदु रामस्य हृदये ३०

---

१. विमृश्यताम्

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।' इति

'करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव।' इति वा ॥

कर्तव्यस्नेहयोः तुमुलं द्वन्द्वयुद्धं प्रवृत्ते । ननु तदा द्वयोः पक्षयोः कतरस्य महत्त्वं तस्य युक्तम् आसीत् सीतापरित्यागो वा शुद्धस्य स्वस्नेहस्य च निर्मलस्य रघुकुलस्य च लोकेन तथा लाञ्छनं वा ? अथवा, 'लोकापवादविषयीभूता सीता रामस्य भार्या आसीद्' इति वा मत्त्वा, 'शुद्धैव खलु सीता' इति वा विश्वस्य सीतां क्षाम्यन् रामः उदाहरणम् उपन्यस्य किमु अध्याचारं प्रजायाः कामचारवृत्तिम् अन्वमोदिष्यत आहो- ५ स्वित् कर्तव्याय स्नेह बलिं हृत्वा स्वजीवितायितां सीतां गृहाद् बहिरकरिष्यत् ? अथ किन्तु तेन विधातव्यम् आसीत् ? किञ्च अचिराभिषिक्तः नृपः स खलु बभूव । 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।' इति तु तावत् प्रसिद्धमेव । अन्ततो गत्वा कर्तव्य-स्नेहयोः कर्तव्यं विजयि अभूत् । रामः सीतां, न न स्वजीवितमेव ननु, निष्कासयामास । नृशंसः यदि सीतां प्रति रामः आसीत्, नृशंसतरस्तु तर्हि आत्मानं १० प्रति अभूत् । नहि तस्य विरहव्यथा सीतायाः विरहव्यथातः ऊनतरा बभूव । विधुरं यदि सीतायाः जीवितं विधुरतरं तर्हि रामस्य आसीत् । सीता यदि प्रणष्टा, रामस्य सौख्यं तर्हि प्रणष्टं बभूव । अथ एवं सत्यपि 'रामराज्यम्' इति शब्दः आभाणकः जातः । जनः रामराज्यं कामयते । अपि जातुचित् केनचिद् नृपेण प्रजार्थम् एतादृशः त्यागः कृतः ? १५

गुणेन भवभूतेः अन्यां नाटकद्वयीम् अपेक्ष्य उत्तररामचरितं विशिष्यते । कतिपयैः गुणविचारैः अत्र पात्रचरित्र चित्रणं नितराम् उज्ज्वलं भासते । इह क्रिया-वेगाभावं (Lack of action) निभालयद्भिः कतिपयैः साम्प्रतिकैः समालोचकैः प्रायेण इदं स्वरूपेण यथा नाटकायं काव्यम् अङ्गीक्रियते न तथा यथार्थनाटकम् । अन्तिमाङ्के योऽत्र नाटकान्तरसमावेशः स तु कालिदासीयेषु नाटकेषु अपि अलभ्यः अस्य २० विशिष्टो गुणः । सीतारामयोश्च पुनः संयोगे यादृशः चमत्कारः गभीरःसम्भावश्च तादृशः शकुन्तलादुष्यन्तयोः वनप्रणये अप्राप्यः ॥

## [इ] शैली

(१) भवभूतिः[1] भावुकः किल कविः, तेन कालिदासो यदि शेक्सपियरेण तुलाम् आरोप्यते तर्हि एष मिल्टनः । यदि हि भवभूतिकृतिषु कालिदास कृतिसुलभ २५

---

१. सूक्तिसन्दर्भेषु तु तावदेवं भवभूतिः उपश्लोक्यमानो दृश्यते—

'भव्यां यदि विभूतिं त्वं तात कामयसे तदा ।
भवभूतिपदे चित्तमविलम्बं निवेशय ॥'
सुकवि द्वितयं मन्ये निखिलेऽपि महीतले ।
भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥'
भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥' इत्यादि ।

सौन्दर्यं माधुर्यं गाम्भीर्यञ्च च दुरापं तद् परिमिते पदे वस्तुरूपस्य वा रस-भाव-रूपस्य वा तस्य तस्य अर्थस्य निबन्धने यथा कुशलो भवभूतिः न तथा कालिदासः। तथा हि कञ्चुकी यथाऽभ्यासं 'रामभद्र' इति अर्द्धम् एव उक्त्वा एकपदे आचारम् अनुस्मरन् 'महाराज' इति सम्बोधनपदं प्रयुङ्क्ते ॥

(२) जगति यद् यद् विभीषणं भव्यं विशालम् अलौकिकं चास्ति तत् तत् ५ सर्वं यथा भवभूतेः हृदयाह्लादनं भवति न तथा कव्यन्तरस्य। तेन कृतानि उत्तुङ्ग-शिखरिणां निबिडाटवीनां निर्झराणाम् उरगकानां च वर्णनानि नितरां रमणीयानि सन्ति। प्रकृतेः कोमलाङ्गप्रेक्षणेऽपि च न सर्वथा उपेक्षावान् असौ अस्ति। तथाहि मालतीमाधवे स्मशाने निशाथवर्णनं तस्य कस्य हृदयं न हरति ॥

(३) 'भूम्ना रसानां गहनेषु प्रयोगेषु' सिद्धहस्तः कविरेष। अतः महावीर-१० चरिते वीरस्य, मालतीमाधवे शृङ्गारस्य, उत्तररामचरिते च करुणस्य सम्प्रयोगः दृश्यते। न केवलं नानानाटकेषु अस्य नानारसप्रयोगः, अपि तु एकस्मिन्नेव नाटके नानारसचमत्कारस्य अनुभवनम् अवाप्यते। यथा मालतीमाधवे एव तृतीये सप्तमे चाङ्के वीरः, तृतीये रौद्रः, पञ्चमे बीभत्सभयानकौ, नवमे करुणः, नवमदशमयोश्च अद्भुतो रसः निबद्धः। १५

(४) महावीरचरितशैल्याः भिद्यमाना मालतीमाधवशैली कविना शनैः शनैः समास्यमाना प्रौढिं निर्दिशति। क्वचित् क्वचित् तस्य पद्येषु वेगः प्रसादगुण-सम-माधुर्यगुणश्च छन्दोलयः प्राप्यते। उत्तररामचरितस्य शैली उदात्ता, उन्नता, ओजस्विनी, रम्या, मसृणा च, 'धीरोद्धता नमयतीव गतिं धरित्रीम्,' इत्यादि-शब्दैश्च तस्याः स्वरूपं कविना स्वयम् उच्यते ॥ २०

(५) 'मनोज्ञस्य यथावद् ग्रथितनिवेशनं' नाम योऽस्याः शैल्याः अपरो विशेषः स सर्वेष्वपि नाटकेषु निःशब्दः ॥

(६) 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति विधानेन दीर्घ-समास-दुर्बोधा गौडी रीतिः यथा भवभूतिकृतिषु दृश्यते न तथा कालिदासरचनासु। प्रायश्च कविना तथैव यत्नेन अर्थगाम्भीर्यम् अनादृत्य कठिनशब्दाः प्रयुक्ताः जटिलानि २५ च वाक्यानि रचितानि ॥

(७) उचितम् अनेन उच्यते यद् अस्य रचनासु 'प्रौढत्वमुदारता च वचसां' चकास्ति ॥

(८) अस्य सरलार्थानि स्वाभाविकानि च पद्यानि अतीव हृद्यानि सन्ति। यथाहि मालतीचरितं निभृतं शृण्वन् माधव आह— ३०

'म्लानस्य जीवकुसुमस्य विकासनानि,
सन्तर्पणानि सकलेन्द्रियमोहनानि।

आनन्दनानि हृदयैकरसायनानि,

दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि।' (मा. ६,८)

अत्र अभिसन्धाय निष्पादितः अन्त्यानुप्रासः भृशं श्लोकरूपं धारयति। एतादृश्याम् एव सरण्यां रामम् उपालभमाना वासन्ती आह—

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयम्' इत्यादि ॥ ५

(९) अप्रसिद्धानां वैयाकरणप्रयोगाणां नानानवीनशब्दानां च अस्य कृतिषु बाहुल्यम् अवलोक्यते ॥

(१०) अस्य पात्राणि, विशेषतः उत्तररामचरिते, यथार्थस्वरूपकाणि प्रतीयन्ते। तथाहि चित्रदर्शने सीतां सम्बोध्य रामः आह—

'किमपि किमपि मन्दं मन्दमासक्तियोगात्' इत्यादि ॥ १०

(११) 'अद्वैतं सुखदुःखयोः' इत्यादिभिः ज्ञायते यद् अन्ये संस्कृत कवयः प्रायेण प्रेमस्वरूपस्य यां कल्पनाम् अकुर्वन्, भवभूतेः कल्पना उदात्ततरा उदारतरा चास्ति ॥

(१२) 'अहो सरसरमणीयता संविधानस्य' (मा. ६,१६-२),

'अस्ति वा कुतश्चिदेवं भूतं विचित्ररमणीयोज्ज्वलं महाप्रकरणम्' १५ (मा. २३,१८) इत्याद्युपन्यासैः कविना स्वरचनोत्थापितः स्वगतः गर्वः प्रकाश्यते ॥

(१३) यद्यपि वसन्ततिलका-शार्दूलविक्रीडित प्रभृतीनि छन्दोन्तराण्यपि अस्य रचनायाम् उपलभ्यन्ते अथापि अस्य प्रेष्ठ वृत्तं शिखरिणी एव ॥

(ई) कालः। २०

दिष्ट्या भवभूतिस्फुरणकालः प्रायः निश्चित एव, यद्यपि हर्षचरित-भूमिकायां बाणेन कव्यन्तरनामधेयैः सह तन्नामधेयं न दृश्यते अथापि (अष्टमशतकभवः) वामनः तत्कृतिः उदाहरति (९०० मित-ख्रीष्टाब्दासन्नवर्ती) राजशेखरश्च आत्मानं भवभूत्यवतारं घोषयति[1]। कल्हणश्च 'भवभूतिः वाक्पतिराजश्च इमौ कान्यकुब्जमहीपतेः यशोवर्मणः कृपाश्रितौ अभूताम्' इति सूचयति[2]। २५ यशोवर्मा तु कश्मीरक्षितिपतिना येन ललितादित्येन जितः 'स ७३६ मिते ख्रीष्टाब्दे

---

१. 'बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः॥' (बा. रा. १,१६)

२. 'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिबन्दिताम्॥' (४,१४४)

चीनदेशं दूतं प्रहितवान्¹ इति तावद् इतिहासविदां विदितम्। वाक्पतिराजेन च स्वरचनायां भवभूतिः उपश्लोकितः, तस्य "अज्जवि" (अद्यापि) इति क्रियाविशेषणेन ज्ञायते च यद् भवभूतिः वाक्पतिराजात् प्राचीनः वाक्पतिराजकाले एव च लब्धप्रतिष्ठः खलु बभूव। तदेवं ७०० मितस्य खीष्टाब्दस्य अभ्यर्णे भवभूतिः आसीद् इति लभ्यते ॥　५

## (८३) राजशेखरः

अकालजलदाभिधस्य महाकवेः पौत्रः उच्चपुरोहितस्य पुत्रः राजशेखरः महति कवीनां कुले जनिं जग्राह। अवन्तिसुन्दरी नाम राजकुलसंभवा तस्य भार्या काव्यशास्त्रे परमप्रवीणा आसीत्। जन्मभूश्च तस्य विदर्भकुन्तलेषु अभवद् इति सम्भाव्यते ॥　१०

### (अ) परिचयः

राजशेखरो नाम केरलभूपतिः स्वरचितां नाटकत्रयीं शङ्कराचार्याय उपानैषीद् इति तावद् माधवाचार्यविरचितात् शङ्करदिग्विजयाद् ज्ञायते। नृपराजशेखरलेखितः यश्च एकः शिलालेखः अवाप्तः पुरातत्त्वविदः नवमं वा दशमं वा खीष्टशतकं तल्लेखनकालत्वेन निश्चिन्वन्ति²। एतच्छिलालेखकारः नृपराजशेखरः एव कविराजशेखरः १५ आसीद् इत्यत्र तु न किञ्चित् साधकं प्रमाणम् उपलभ्यते। कविराजशेखरस्य पुरोहितसुतत्वादेव तस्य नृपत्वकल्पना अन्याय्या। यदि नाम नृपराजशेखराद् अनन्तरं कदाचित् कविराजशेखरः उत्पेदे इति सम्भाव्यते ॥

### (आ) तस्य ग्रन्थाः

स्वबालरामायणप्रस्तावनायां राजशेखरः आत्मनः षड्ग्रन्थकर्तृत्वं सूचयति। २० तस्य या चतुर्ग्रन्थी अधस्तात् परिचाय्यते तां व्यतिरिच्य स रत्नमञ्जर्याख्यां नाटिकां अष्टपत्रदलकमलं च (यथा भोजसाद्वेण ज्ञायते) प्राणैषीद् इति सम्भाव्यते ॥

### [१] बालरामायणम्

दशाङ्कनिबद्धम् इदं तावद् महानाटकम्। अस्य प्रस्तावनायां कविः आत्मनः मिथ्यागुणश्लाघां रचयति। नाटकेऽत्र प्रारम्भादेव सीतालिप्सया रामं प्रति कृत- २५ रावणद्रोहः निबद्धः। सीताविषयिणी रावणरतिश्च अत्र प्राधान्यम् गमिता कविना इत्येष नाटकस्यास्य विशेषः ॥

---

१. भवभूइ जलहि निग्गयकव्वामयरसकणा इव फुरन्ति।
जस्स विसेसा अज्जवि वियडेसु कहाणिवेसेसु ॥' (गउडवहो ७९९)

२. विमृश्यतां त्रावनकोरपुरातत्त्वानुसन्धानपत्रिका, द्वितीयमाला, ८-११ ॥

## [२] बालभारतम् अथवा प्रचण्डपाण्डवम्

अपूर्णस्य अस्य नाटकस्य केवलम् अङ्कद्वयं प्राप्तं यत्र द्रौपदीविवाह, द्यूत-क्रीडा, पाण्डवानां वनवासप्रस्थानं च वर्ण्यते ॥

## [३] विद्धशालभञ्जिका

एषा हि यथानाट्यशास्त्रं चतुरङ्कनिबद्धा नाटिका। अस्या नायकः लाटा- ५ धिपतिः नृपचन्द्रवर्मा। कथावस्तु च अस्याः रम्यत्वमहत्त्वाभ्यां शून्यम् ॥

## [४] कर्पूरमञ्जरी

चतुरङ्कमय्याम् अस्यां नाटिकायां नृपचन्द्रपालस्य कुन्तलदेशराजसुतायाश्च परस्परं प्रणयस्य कथा कथावस्तुत्वेन निबद्धा। भाषा अस्य सर्वथा प्राकृतम्। स्वपत्नीप्रेरणया च कविः एनां कृतवान्। प्राकृतं हि स्त्रीणां भाषा वर्तते, तया १० ग्रन्थं निबद्धुं कश्चित् सर्वभाषाविलासिनीभुजङ्गम एव प्रभवति इति साभिमानं कविनाऽत्र उक्तम् ॥

### (इ) नाटकीयकला

राजशेखरस्य एष एव विशिष्टो गुणो यदेष महता आयासेन वर्णनानि निष्पा-दयति[1]। अस्य मौलिककथावस्तुनिर्माणे वा चतुरचरित्रचित्रणे वा चिन्ता न च नास्ति। १५ एष तु सर्वतोभावेन सकलवर्णनेभ्यः अन्योन्याविरुद्धवर्णप्रचुरप्रयोगाय च प्रयतते। डाक्टरकीथमतेन तु अनुप्रासो यदि कवितायाः मुख्यं लक्षणं तर्हि महाकविषु राजशेखरो गण्यः स्यात्। संस्कृतप्राकृतच्छन्दसां सत्प्रयोगे च अस्य महत् कौशलं दृश्यते। न्यूनाग्न्यूनानि सप्तदश प्राकृतच्छन्दांसि अनेन व्यवहृतानि। यथा भाषा अस्य सरला रुचिरा च तथा छन्दांसि अपि मधुराणि मनोहराणि च। भाषित-२० भाषाभ्यः, विशेषेण महाराष्ट्रीतः, शब्दान् स्वैरम् आददे अयम्। गीतगोविंदमोह-मुद्गरयोः यथा एतद् रचनायामपि प्रायिकः अन्त्यानुप्रासप्रयोगः उपलभ्यते ॥

### (ई) कालः

एकतः राजशेखरः भवभूतेः अवरतं किल आत्मानं घोषयति, अपरम् शाक-भवाद् आलङ्कारिकोद्भटाद् नरमशानकज्ञाताद् आनन्दवर्धनाच्च उदाहरति। २५

---

१. सूक्तिग्रन्थेषु राजशेखरस्तुतिपरम् इदं पद्यं पठ्यते—

'पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मताः,
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः।
भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं,
तद् भ्रातः ! शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥'

२. भवभूतिनामनिर्णयप्रकरणे प्रथमा पादटिप्पणी प्रेक्षणीया ॥

